# विषयानुक्रमणिका

# जयतु जयतु भुवि मोहनदासः!

जयतु जयतु भुवि मोहनदास ।
भारतवर्ष - विभूति - विलास ॥

यो गन्धीति प्रसिद्धि यात,
यस्य मनसि गर्वो नायात,
यो 'वा'-हृदय-ललितमधुमास ।
जयतु जयतु भुवि मोहनदास ॥

मानवताया जीवन - दाता,
मानवताया भाग्य - विधाता,
सत्याग्रह-हित विहित - प्रयास ।
जयतु जयतु भुवि मोहनदास ॥

बहु-जन हित - कामनासु लीन,
बहु-जन सुख साधना - प्रवीण,
प्रेम - भावना यस्योच्छ्वास ।
जयतु जयतु भुवि मोहनदास ॥

यस्याहिंसा परम शस्त्रम्,
येन धृत करनिर्मितवस्त्रम्
सत्ये यस्य परमविश्वास ।
जयतु जयतु भुवि मोहनदास ॥

येनात्मनि निर्भयता नीता
कण्ठे यस्यागुञ्जद्गीता,
पीडायामपि यस्योल्लास ।
जयतु जयतु भुवि मोहनदास ॥

श्रम - संयम - सेवा - संलग्न,
राम - नाम रस - सागर - मग्न,
यस्य शुद्धि सबलमुपवास ।
जयतु जयतु भुवि मोहनदास ॥

अस्पृश्यानामश्रु—धनानाम्,
वन्धुरीश्वरो दीनजनानाम्,
येन कृतो ग्रामीण-विकासः !
जयतु जयतु भुवि मोहनदासः !!

त्यागमयी यस्यार्थिक-समता,
ज्ञानमयी यस्यात्मिकममता,
येन नाशितो भवसंत्रासः !
जयतु जयतु भुवि मोहनदासः !!

यः कथितो लोकैरवतारः,
सेवा - ग्राममहर्षिरुदारः,
छिन्नो येन दासता - पाशः !
जयतु जयतु भुवि मोहनदासः !!

यस्य दर्शने जीवन - शिक्षा,
यस्य जीवने कठिन - परीक्षा,
दिशि-दिशि दीव्यति यस्य प्रकाशः !
जयतु जयतु भुवि मोहनदासः !

प्रो० रामनाथ पाठकः 'प्रणयी'



# सम्पादकीयम्

## प्रास्ताविकम्

विंशतितमा शताब्दी भारतवर्षस्येतिहासाय परममहत्त्वपूर्णास्ति। अनया शताब्द्या चिन्तनक्षेत्रे महात्मनो गान्धिन, काव्यक्षेत्रे रवीन्द्रनाथठक्कुरस्य तथा शिक्षाक्षेत्रे महामनोमदनमोहनमालवीयस्य जन्मभिरभूतपूर्वं कार्यं कृतम्। महात्मा गान्धी त्वेतादृगसाधारणो महापुरुष आसीत्, येन भारतस्य सांस्कृतिकेतिहासे राजनैतिकेतिहासे चानेकानि मौलकचिन्तनानि समुपस्थापितानि। तेनाहिंसासदृशमस्त्रं प्रदाय देशः स्वतन्त्रो विहितः। एवं राष्ट्रपिता महात्मा गान्धी स्वस्य तपसा त्यागेन चिन्तनेन च नवीनां विचारधारां विश्वहिताय कल्पितवान्। तादृशः सर्वतोमुखचिन्तकः शङ्कराचार्यानन्तरमेकसहस्रवर्षावधौ नान्यः कोऽप्यजनि। अस्माकं दृष्ट्या महात्मा गान्धी श्रमणपरम्परायाः एतादृशः सन्त आसीत, यो वर्णभेदं जातिभेदं तथान्योच्चावचभावनामुन्मूल्य समतायाः सिद्धान्तं प्रतिपादितवान्। स्वामी श्रीभगवदाचार्यमहाराजः कथितवान्—

> सदैव तद्वाञ्छति मुक्तिमञ्जिकां विदेशिसत्तामिह तत्र काङ्क्षति,
> न चापि तत्कामयते कदाप्ययो विदेशिसेना विहता सहायताम्।
> अहिंसकेनैव बलेन तत्क्षमं समर्जितुं स्वस्य महास्वतन्त्रताम्।[1]

अर्थात् विदेशिभ्यो भारतस्य मुक्तिः केवलाहिंसकशक्त्यैव सम्भाव्यते, या शक्तिः शतघ्न्यादिषु द्विनलिकासु च नास्ति। सा शक्तिरहिंसायां संयमे चास्ति। यदा मनुष्यः स्वार्थे पतति, तदा दासतागरलं तमावेष्टितं करोति। आत्मशक्तेरेकमात्र जागरणोपायमात्मनियन्त्रणमेवास्ति। यः स्वतन्त्रतां समीहते, तस्मिन्नात्मबलस्यापेक्षा वर्तते। आत्मबलाभावे जनः स्वतन्त्रः न स्थास्यति। स्वतन्त्रतायाः स्वादं सैव जातिर्व्यक्तिर्वा लभते, यस्त्यागं तपश्चरणं वा स्वीकरोति। गान्धिना कथितम्—

---

१. पारिजातसौरभम्—पण्डितराजस्वामिश्रीभगवदाचार्यविरचितम् द्वितीय सर्ग श्लोक ६०,६१ तथा द्रष्टव्यम्
In search of the supreme, Vol I, Nava jivan publishing House Ahmedabad—14, 23-24

"हिंसाया परिणामो बहुधा विपरीत एव भवति । अस्माकं देशे बहवो जना नैतिकदृष्टिमपहाय केवलं व्यावहारिकदृष्ट्यैव विचारयन्ति । किन्तु वयं हिंसामार्गं सारहीनं विचार्य परित्यक्तवन्त । भारते हिंसया विनाश एव भविष्यति ।"...... निश्चितमिदं यत् यः साहसं कृत्वा कार्यक्षेत्रेऽप्रसरो भवति, विजयवैजयन्ती तमेव वृणोते ।[1]"

महात्मा गान्धी देशस्य राष्ट्रस्य समाजस्य वैयक्तिकजीवनस्य चोहापोहनं कृत्वैका जीवनप्रक्रिया प्रतिपादितवान् । सा प्रक्रिया प्रकारान्तरेण दर्शनाभिधानं प्राप्नोति । पारिजातसौरभे ऽस्य चिन्ताधाराया. विश्लेषणं विवेचनञ्च विद्यते—

लुण्ठितानि सकलानि यन्नृणां द्रव्यवासवसनादिकानि ह ।
तान्कथं सुसुखितान्विदध्महे चिन्तयेति न शर्म लभामहे ॥[2]

× × ×

सर्ववर्णजनतोपभुक्तये भूरियं च भविता निरावृता ।
या प्रवर्त्तत इहाद्य भावना सा सती भवतु दीर्घजीविनी ॥
ब्राह्मणाश्च वणिजश्च मुस्लिमा अन्त्यजा अपि भुवीह सर्वदा ।
सर्वमानवहितानुगामिनी कांचनापि सुकृतिं वितन्वताम् ॥
नाहमस्मि मुखजो न बाहुजो नोरुजात इति नास्मि पादजः ।
नैव हिन्दुरथ नैव मुस्लिम. सर्व एव मयि सर्वगोऽप्यहम् ॥[3]

## महात्म-गान्धि-दृष्ट्या दर्शनम्

दर्शनं मनुष्यस्यैको निष्पक्षो बौद्धिकप्रयत्नोऽस्ति, येनासौ विश्वं तस्य सम्पूर्णताया ज्ञातुं प्रयतते । वस्तुत कस्यापि वस्तुन ज्ञानप्राप्ते. साधनद्वयमस्ति । प्रथमं साधनं तदस्ति, यस्मिन् वस्तुनोऽशान् पृथक्-पृथक् कृत्वा समस्तवस्तुनः ज्ञानं प्राप्यते तथा द्वितीयं साधन तदस्ति, यस्मिन् समग्रवस्तुनः ज्ञानमवाप्यते ।

बौद्धिकप्रयत्नेन सह दार्शनिकचिन्तन तदैव पुष्टं मन्यते, यदात्मानुभूतिरपि तेन सहावस्थिता भवेत् । मनुष्ये चिन्तनस्योत्पत्ति. स्वाभाविक्याः जिज्ञासाया. फलस्वरूपा विद्यते । अत स जीवनं जगच्च ज्ञातुं यतते । मनुष्यो जीवति तथा स ज्ञातुं प्रयत्नं करोति यदसौ कथं जीवति तथा तस्य जीवनस्य कोऽर्थोऽस्ति ? तस्य

---

१. भारतीयम्, विष्णुप्रकाशनम्, गया, सन् १९६२ ई०, पृ० ३६५
२. पारिजातसौरभम्, पण्डितश्रीभगवदाचार्यः, ६।५१
३. सैव ६।७१–७३

जीवनेऽन्यजीवजीवनेषु च किं पार्थक्यम्? मनुष्य केवलजीवनेनैव न तुष्यति, स जीवनस्यार्थं जिज्ञासते। तस्येयं जिज्ञासोत्तरोत्तर वर्द्धते तथा तस्य चिन्तनप्रक्रिया गतिशीला भवति। जीवन जगत्कृते जायतेऽत जीवन वेत्तु जगत परिज्ञान परमावश्यकमस्ति। स पश्यति यत् पुष्पाणि विकसन्ति तथा पुन शीर्णानि जायन्ते; आकाशे मेघा दृश्यन्ते तथा पुनरितस्ततो विलीयन्ते। वसन्तस्य मादकतया सह ग्रीष्मस्य तप्त पवनोऽपि चलति। चिन्तनशीलमानव एतन्निखिलदृश्यानामर्थं ज्ञातु समीहते तथा मानवजीवनेन सह वर्तमानसम्बन्धानां विश्लेषण विकीर्षति।[२]

घटनाना कारणेषु विश्लेषितेषु प्रतीयते यत् प्राकृतिकघटना अपि कार्यकारणनियमानुसार घटिता भवन्ति। एव प्रकारेण चिन्तनशीलमानव जीवन-जगतो कार्यकारणसम्बन्ध ज्ञातु प्रयास करोति, तथैव एव तदीय प्रयास दार्शनिकचिन्तनमस्ति। दार्शनिकस्य बौद्धिकी यात्रा तदैव समाप्ता भवति, यदासौ जीवनजगतोरर्थं ज्ञातु प्रभवति।[४]

भारतीयपद्धत्यनुसार सर्वविधानुभूतीना युक्तिसङ्गता व्याख्या विधाय वास्तविकताया यथार्थज्ञान दार्शनिकताया उद्देश्यमस्ति। अनुभूतयो द्विप्रकारा भवन्ति ऐन्द्रिया, अतीन्द्रियाश्च। उभयोरपि गणना दर्शनसूत्रे भवति। वय ससारस्य भौतिकपदार्थाना ज्ञानमिन्द्रियै कुर्म, यान् पदार्थान नेन्द्रियाण्यवगच्छन्ति, तेषा ज्ञानमतीन्द्रियानुभूत्या प्राप्यते। एषाध्यात्मिकयनुभूति बौद्धिकज्ञानसदृशी न भवति। बौद्धिकज्ञाने ज्ञातृज्ञेययो द्वैत तिष्ठति, परमस्यामनुभूत्या द्वयोरप्यैक्य जायते। एषात्मानुभूतिरनायास प्राप्यते। एतस्यै साधनाया आवश्यकता भवति। साधनाया अर्थोऽस्ति मनोवाकबुद्धि भावनाचेष्टा पवित्रा परिमार्जिताश्च सम्पाद्य एकस्या विशेषदिशि तत्प्रेरणा। एतासा कस्मिन् कस्यामपि वा दुष्टे, दुष्टाया वा साधना दूषिता जायते। अनवरत साधनाया फलस्वरूप साधकस्य परमतत्त्वस्यानुभूतिर्भवति, एषैवानुभूतिराध्यात्मिकयनुभूतिरस्ति।

महात्मनो गान्धिनो विश्वासोऽस्ति यद्दार्शनिकचिन्तनस्योत्पत्ति जिज्ञासया नाभवत्, प्रत्युत दु खमात्रस्य नाशाकाङ्क्षया भवति तथैतस्योद्देश्य मोक्षप्राप्तिविद्यते। मोक्षप्राप्तिश्च तदा भवति यदा साधकस्य परमतत्त्वस्य साक्षात्कारो भवति। जिज्ञासामात्रस्य शमन दर्शनस्य लक्ष्य नास्ति। तस्य लक्ष्य तु जीवनस्य परम-

---

२ In search of the supreme Val II P 320-323.

४. Cantemporaray Indian Philosophy, P 21, edited by Radbakrisnan, London, 1958

सुखस्य प्राप्तिर्विद्यते । एतदेव कारणमस्ति यत् भारतीयदर्शने जीवनमूल्याना मीमासाऽपि गर्भिता वर्त्तते ।

वस्तुत विश्वमिद किमस्ति ? एतत्कथमस्ति ? एतस्योत्पत्तिश्च कथमभूत् ? एतस्य वास्तविकस्वरूप किमस्ति ? घटना केनापि नियमेन घटिता भवन्ति उत एवमेव वा ? वास्तविकसत्ता काऽस्ति ? तस्या ज्ञान कथ भवितुमर्हति ? सत्यज्ञानस्य स्वरूप साधन सीमाश्च का सन्ति ? ज्ञानाचारयो क सम्बन्ध ? आचारस्य कि मान मूल्यञ्चायाति ? आचारस्य मूल्याङ्कनप्रक्रिया कथ केन प्रकारेण वा सम्भाव्यते ? कीदृशमाचरण कर्त्तव्य कथ्यते ? व्यक्तिसमाजयो कानि कर्त्तव्यानि सन्ति ? राष्ट्रेषु कीदृश सम्बन्धोऽपेक्षितो विद्यते ? तेषा सम्बन्धानामाधारभूता सिद्धान्ताश्च के सन्ति ? मनुष्यजीवनस्य कि लक्ष्यमस्ति ? तस्य लक्ष्यपूर्त्तौ च केन प्रकारेण समाजस्य सहायतापेक्षिता वर्त्तते ? मनुष्य सौन्दर्यं कथ समीहते ? सौन्दर्यस्य स्वरूप किमस्ति ? इत्यादिप्रश्ना दर्शनेऽन्तर्हिता सन्ति । एव महात्म-गान्धि-प्रतिपादितदर्शनस्य विषय व्यापको गहनो महत्त्वपूर्णश्च विद्यते । स हि व्यक्ति समाजयोर्मध्ये उत्पाद्यमानाना विभिन्नप्रश्नाना समाधानमपि दर्शनसरण्यैव कृतवान् ।[१]

महात्मगान्धिनो दर्शनस्य सर्वोत्तमा विशेषतैषा विद्यते यत् स हि जीवनस्य जगतश्च सर्वाङ्गीणमध्ययनमकार्षीत् । जीवन-जगतो सम्बन्धे न कामपि समस्या स परित्यक्तवान् । तस्य दार्शनिकचिन्तन रागद्वेषरहित निष्पक्ष युक्तिमङ्गतञ्चास्ति । तस्य मत विद्यते यद दार्शनिकविचार एवास्माक गतिविधौ स्थिरत्वमानयति । जीवन कीदृग्भविष्यति ? तथा तादृग्जीवनेन कथ वय विश्वकल्याणे योग दास्याम एतत्सर्वमस्माक दार्शनिकविचारेष्वेव पर्यवसित भवति । वस्तुत विना कमपि सैद्धान्तिकमाधार जीवने श्रृङ्खला दृढता च नायास्यत । आचरणे सामञ्जस्यानयनाय विचारे सामञ्जस्यमावश्यक विद्यते । विचाराणा सामञ्जस्य च तदानीमेव सम्भवमस्ति, यदा तेषामाधारशिलारूपेण जीवनजगतो विषये समुचिता सुदृढाश्च सिद्धान्ता प्रस्तुता भवेयु । एते सिद्धान्ता जीवन प्रति व्यक्तिदृष्टिकोण स्थिर कुर्वन्ति तथा तस्य जीवनपर्यन्तस्य क्रियाणा मध्ये एका श्रृङ्खला समुपस्थापयन्ति । सक्षपेण वय महात्मगान्धिनो दार्शनिकविचारान् निम्नाङ्कितवर्गेषु प्रस्तुतान् करिष्याम —

---

१ "हरिजन" पत्रम्—१९३४
Mahatma Gandhi P. 5-6, edited by S Radhakrishnan, London, George Allen and un win Ltd ( 1949 )

१ ईश्वरमीमांसा २ तत्त्वज्ञानम् ३ नीतिविज्ञानम् ४ जीवनदर्शनम् ५ सौन्दर्य मीमांसा ६ प्रमाणमीमांसा ७ अर्थदर्शनम् ८ समाजदर्शनम् ९ मूल्यमीमांसा ।

## ईश्वर-मीमांसा

महात्मगान्धिन ईश्वरे पूर्णो विश्वासोऽस्ति । स ईश्वरस्यास्तित्व स्वीकरोति । 'ईश्वर सर्वज्ञ शक्तिशाली च विद्यते' तस्य पूजयोपासनया चात्मशक्तीना विकासो जायते । गान्धिनोक्तम्—"अहमव्यक्तरूपेणावश्यमेवानुभवामि यद् यदा मामभित सर्वं परिवर्त्तित भवति, मृतमपि जायत, तदैपु परिवर्त्तनेष्वेका चिच्छक्तिरस्ति, यस्या कदापि परिवर्त्तन न भवति, या सर्वमेकत्र बद्ध्वा रक्षति, या नवा सृष्टि रचयति, एषैव शक्तिरीश्वरोऽस्ति । परमात्मा चापि कथ्यते । अहमिन्द्रियै मेपामनुभव करोमि, तेपु नैकमप्यन्यद् वस्तु स्यायित्वमर्हति । अत एव 'तत्सत' एक स एवास्ति । सा च शक्ति शिवरूपा स्यादशिवस्वरूपा वाह तु ता शुद्धाकल्याणकारिणीमेव पश्यामि । यतोऽह पश्यामि यन्मृत्युमध्ये जीवन स्थित भवति । असत्ये सत्यस्यास्तित्व विद्यमान जायते । अतोऽह मन्ये यदीश्वर जीवनमस्ति, सत्योऽस्ति, प्रकाशोऽस्ति । स एव च परममङ्गलमस्ति"[१] । अन्यत्रापि लिखितमस्ति—

"If we exist, if our parents and their parents have exited, then it is proper to belive in the parent of the whole creation" There is orderliness in the universe, there is an unalterable law govrning everything and everything and every being that exists or iives It is not a blind law, for no blind law can govern the conduct of living beings that law then which governs all life is God. Law ano Law-giver are one"[२]

स्पष्टमेतद् यन्महात्मगान्धिना अस्माक मातृपितृस्तित्ववदीश्वरस्याप्यस्तित्व

---

१ महात्मागान्धी—धर्मपथ, छात्रहितकारी पुस्तकमाला, दारागज, प्रयाग, १९३३ ई०, पृ० ५ तथा—
*In search of the supreme, val II, P 302-303*
Wit and wisdom of Mahatma Ganphi, P 116-120
The story of my Experiments with truth, P 189-200

२ The Philosophy of Mahata Gandhi, university of calcutta ( 1968 ) P 43

स्वीकृतम् । अस्मिन्ससारे एका सुनिश्चितनियमपरम्परा चलति, अस्या. परम्पराया सञ्चालिका सम्पादिका च काऽपि शक्तिरस्ति ।

महात्मा गान्धीश्वरस्य साम्राज्य हृदये मनुते । इन्द्रियज्ञानेनेश्वरबोधो न भवितुमर्हति । य परमात्मसाक्षात्कार करोति, तस्याचारे, व्यवहारे, चरित्रे च परिवर्त्तनानि जायन्ते । गान्धी लिखितवान्—"य मनुष्य स्वयमेवेश्वरस्योपस्थिति परीक्षितु कामयेत, स श्रद्धया जीवितया तमनुभवितुमर्हति तथा श्रद्धाविश्वासौ बाह्यप्रमाणैरपरीक्ष्यावत सुरक्षिततमो मार्गोऽस्ति ससारस्य नैतिकशासने विश्वासो नैतिकनियमस्य सत्यप्रेम्णो सर्वोपरिताया श्रद्धाभावो विद्यते । यत्र सत्य-प्रेम-विरुद्ध प्रत्येक वस्तु निराकृत भवेत्, तत्र श्रद्धाविश्वासावलम्बन सर्वाधिकं सुरक्षित वर्त्तते।

"अह यावान् शुद्धो निर्विकारश्च स्यातु प्रयते, मह्य परमात्मा तावानेव समीपवर्त्ती ज्ञायते । अद्य तु मम श्रद्धा नाममात्रात्मिका विद्यते, पर यदा सा हिमालयसमाटला भविष्यति, हिमालयशिखरवर्तिहिमसदृशैव दिव्या शुभ्रा च भविष्यति, तद्दिन मयि कियत्यधिका शक्तिर्भविष्यति ।"[1]

स्पष्टमस्ति यत् महात्मागान्धीश्वरे विश्वसन् नैतिकतायै महत्त्वमददात् । श्रीधीरेन्द्रमोहनदत्तो लिखितवान् यन्महात्मगान्धिनो दृष्टया सत्य शिव सुन्दरमीश्वरोऽस्ति । ईश्वरस्य निवासस्तत्रैवास्ति यत्रेमे त्रयस्सहैव निवसन्ति ।[2]

गान्धीमहोदय एकत्र लिखितवान् यन्ममेश्वरस्तु मम सत्य प्रेम च वर्तते, नीतिरीश्वरोऽस्ति, सदाचारश्चेश्वरोऽस्ति, निर्भयतेश्वरोऽस्ति, ईश्वर जीवनप्रकाशयोरेक मूलमस्ति, पुनरपि सर्वेभ्य एतेभ्य परोऽस्ति । ईश्वर अन्तरात्मैवास्ति, स नास्तिकाना नास्तिकताप्यस्ति । यत स स्वामर्यादितप्रेम्णा तानपि जीवितान् रक्षति । स हृदयदर्शकोऽस्ति, वाण्या बुद्धेश्च परोऽस्ति । वय स्वय यावदात्मनो जानीम , स ततोऽधिकमस्मानस्माक हृदयानि च जानाति । यथा वय वदाम स तथैवास्मान्न जानाति, यत स जानाति यद् वय जिह्वया य ब्रूम , स एव भावोऽस्माक प्रायो न भवति, तथैतत् कियन्त ज्ञात्वा कुर्वन्ति कियन्तश्चाज्ञात्वैव । ईश्वर तेषा कृते व्यक्तिरेवास्ति ये त व्यक्तिरूपे समुपस्थित दिदृक्षन्ति । यस्त स्प्रष्टुमिच्छति, स-

---

१ धर्मपथ, छात्रहितकारीपुस्तकमाला, दारागज, प्रयाग, पृ० ६-७ तथा—
In Search of the Supreme Val I, Navajivan publishing house Ahmadabad, 80-90

२ The philosophy of Mahatma Gandhi, Page 58-59

तस्मै शरीरं दधाति । स पवित्रतमं तत्त्वमस्ति । यस्य तस्मिन् श्रद्धास्ति, तस्मै एव तस्यास्तित्वमस्ति ।[1]

गान्धिमहोदयस्य विचारानुसारमीश्वरः परमसंवेदनशीलोऽस्ति । वयं यथान्यैः सह व्यवहारं कुर्मः ते तथैवास्माभिः सह व्यवहारं कुर्वन्ति । ईश्वरः परमदयालुः वर्तते । स सर्वैः सह दयापूर्वकं व्यवहारं करोति ।

गान्धिमहोदयः रामं मोक्षदातारं मनुते तथा तस्यैव रामोऽपि परमेश्वर एवास्ति । अस्य मते रामः केवलः दशरथपुत्रः नासीत्, अपितु अयं व्यापकः सर्वशक्तिमान् सर्वज्ञोऽस्ति अयं सर्वस्य जगतः स्थित्युत्पत्तिविनाशानां कारणं स्वतोऽकारणं जाग्रदाद्यवस्थानां समाधिसहितानामनुस्यूतं देहेन्द्रियादिभिर्यदगम्यं विद्यते, तदेवरूपं रामस्य ।

अत्रेदमस्ति विचारणीयम्—गान्धी मत्स्यवराहनृसिंहावतारेभ्योऽपि मान्यतां ददाति । मनुष्यः देहाभ्यासेनेश्वरस्य कल्पनां देहधारिरूपे करोति । गीतासदृशं तस्यापि कथनमस्ति यत् यदा धर्मस्य ग्लानिर्भवति तथाधर्मश्च वर्धते तदा धर्मस्य रक्षार्थं सोऽवतारं गृह्णाति । स एतदपि कथितवान् यदवतारस्य वार्त्तायां तावत्येव सत्यता विद्यते, यावत्यैतिहासिकपुरुषस्येश्वररूपेऽथवेश्वरस्यैतिहासिकपुरुषस्य रूपे ऽवतरणकल्पनाया । ये-ये महापुरुषा अभूवन् तेषां गुणान् वीक्ष्य मनुष्यस्तान् पूर्णावतारान् वांशावतारानमन्यत । गान्धी लिखितवान्—"वयं कस्यापि देहधारिण ईश्वरस्य पूजां न कुर्मः, वयन्तु स्वनिरञ्जनं निराकारं राममर्चाम, तस्य निकटे गतिः सरला नास्ति, अनेनैव कारणेन तस्य सामीप्यलाभार्थं मूर्त्तिमत ईश्वरस्य पूजा विधीयते, तथा तस्य भजनान्यपि गायामः"।[2]

गन्धीश्वरप्रार्थनाया विश्वसितिस्म । स समस्तमनुष्यैः सह प्रेमन्यायपूर्णव्यवहारश्च सत्यां प्रार्थनाममन्यत । प्रार्थनाया समयदानेन धैर्येण श्रद्धया च सह पवित्रतायाः प्राप्तिर्भवति । स लिखितवान्—"निश्चयात्मिका वैयक्तिकी या प्रार्थनेश्वरं किमपि याचितुं विहिता भवेत्, सा स्वभापाया कृता भवेत् । अनया प्रार्थनयेश्वरोऽस्मान् प्रत्येकं जीवं प्रति शक्तिं ददातु, तथा कापि वार्त्ताधिका न भवेत् । प्रार्थना याच्ञा न वर्त्तते, एषात्मन आह्वानमस्ति । ईश्वरसत्तास्वीकारस्यैतावानेवार्थोऽस्ति यत् मनुष्यो जगति किमपि दुष्कर्म न कुर्यात्, कस्मा अपि कष्टं न यच्छेत् तथा कमपि

---

१. धर्मपथ, पृ० १९-१७; हरिजन १९३८ ई०

२. धर्मपथ—पृष्ठ २१ तथा—
In search of the supreme Val. I पृ० 40-50

निजापेक्षया नीच नावगच्छेत्। य मानवमात्रेण सह प्रेमव्यवहार करोति, स ईश्वरस्यास्तित्वमनुभवति "।[१]

परमात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञ सर्वानुभावी च वर्तते। अय नित्यज्ञानादिमत्त्वेन सर्वोत्कृष्ट । गौतमन्यायवत् शरीरमन्तरेणैवेश्वरेण मन्त्रादिवत्कार्योत्पादनमिति। अत्रानुमान भवति—ईश्वर कारण पुरुषकर्माफल्यदर्शनात्। न पुरुषकर्माभावे फलनिष्पत्ति । शरीरहेत्वदृष्टाभावात्परमात्मा शरीररहित एवास्ति, अनेन सत्यरूप परमात्मास्ति। नहि सत्यात्परोऽपर ईश्वरोऽस्ति। विशुद्ध चैतन्य पुरुषोत्तम ईश्वर पितामह ईश्वर अन्तरात्मानुभूतिरीश्वर, सच्चिदानन्दस्वरूप ईश्वर, इतीश्वरस्यानेकानि रूपाणि स्वीकृतानि महात्मना।

गान्धिदृष्ट्या परमात्मा क्लेशकर्मविपाकाशयैरपरामृष्ट पुरुष स्वेच्छया निर्माणकार्यमधिष्ठाय लौकिकवैदिकसम्प्रदायप्रवर्त्तक ससाराङ्गारे तप्यमानाना प्राणभृतामनुग्राहकश्चास्ति।[२] अनेन हेतुना प्रार्थनाया आवश्यकता विद्यते।

यस्य जनस्य हृदय विशुद्धो वर्त्तते, स एव मनुष्य ईश्वरस्यास्तित्वमनुभवति। य कलुषितविचारयुक्तोऽस्ति, अथवा यस्य जीवने न कापि मर्यादा विद्यते, स मनुष्य ईश्वरस्यास्तित्व नानुभवति।

वस्तुतो मनुष्यस्य सद्विचार एवेश्वरोऽस्ति। य ईश्वरस्य साक्षात्कार समीहते, स स्वकीयमात्मान शुद्ध प्रबुद्ध वा कुर्यात्। प्राकृतिकनियमाना पर्यायभूता एवेश्वरीयनियमा वर्त्तन्ते। मनुष्य कर्मकरणे स्वतन्त्रोऽस्ति, स फलमपि स्वतन्त्ररूपेण प्राप्नोति। य प्राकृतिकनियमाननुसरति स एवेश्वरीयनियमान् जानाति।

गान्धिन श्रद्धान्धा नासीत्। स तस्यामीश्वरशक्त्या विश्वसितिस्म, या शक्ति मानवायेश्वरीयरूप ददाति। मनुष्यस्य यदा सर्वा दुर्बलता दूरीभवन्ति, तस्य विकारा नश्यन्ति, तदा स परमात्मन साक्षात्कार करोति। ईश्वरस्य सत्ताया बोध जीवच्छ्रद्धया भवति, येनेश्वरास्तित्वे विश्वासो विहित, तेनैव तस्याकथनीयाज्ञाताशक्तिरनुभूयते। यथार्थत जगत सम्पूर्णजन्तव समाना वर्त्तन्ते। येषामधिक उपयोगो भवति, तेषामधिक महत्त्वमस्ति। ईश्वरदृष्ट्या न कोऽपि लघुर्न च कोऽपि महान् विद्यते। सत्यहङ्कारे नष्टे ईश्वरीयशक्त्या परिज्ञान भवति। ईश्वर सर्व-

---

१ The philosophy of Mahatma Gandhi, Page 37-45.

२ तुलनीयम्—सर्वदर्शनसग्रह, पृ० ३३३ तथा—
The story of my experiments with, truth, page 56-60

द्रष्टा भवन्नपि जगत्पदार्थैर्लिप्तोऽस्ति। सैद्धान्तिकदृष्टयेश्वर "परमतत्त्वम्" व्यावहारिकदृष्ट्या परमसाध्योऽस्ति।

गान्धिदृष्ट्या विश्वस्येश्वर केवल निमित्तकारणमस्ति। अयमेवैकमात्र परमार्थतत्त्वमस्ति, य विना किमप्युपादान वैविध्यपूर्णसंसारस्य रचना विदधाति। एष ससारश्चिरन्तनोऽनादिश्च वर्तते, सृष्टे कदाप्यन्तो न जायते। ईश्वर स्वस्मिन् पूर्णो निरपेक्षश्चास्ति। ईश्वरकृते संसारस्यापेक्षावश्यकता वा नास्ति। यत स स्वभावत पूर्णोऽभावरहितश्च वर्तते। ससारस्य जडचेतनपदार्था केनापि नियमविशेषेणैव सञ्चालिता भवन्ति। एष नियमविशेष प्राकृतिकनियम ईश्वरीयनियमो वा कथ्यते, विश्व स्वयमेव स्वतन्त्रगत्या स्वनियमानुसार चलति। ईश्वर तदीय शासन पर्यवेक्षण वा न करोति। ईश्वर कस्मिश्चिदपि कार्ये हस्तक्षेपमपि न कुरुते, येन सृष्टे समस्तकार्याणि निरन्तर सम्पद्यमानानि जायन्ते। प्रत्येकात्मनि स्वतन्त्रकार्यसम्पादनक्षमता विद्यते। अत सत्सु कार्येष्वीश्वरस्य निवासो विद्यते। य सेवाया त्यागस्य च कार्यं कुरुते स ईश्वरानुकम्पा लभते। महात्मगान्धिदृष्ट्या राम एवेश्वरोऽस्ति। एतस्य तथ्यस्याभिव्यक्ति स्वराज्यविजयनामकग्रन्थे पण्डितया सौभाग्यवत्या क्षमारावेन निम्नप्रकारेण कृता विद्यते—

> प्रकाशयति सच्चेत स राम परमेश्वर ।[1]
> तत्प्रकाशोत्सवेनासौ नन्दति प्रेमभाजन ॥

गान्धिना रामरहीमयोरेकत्वमपि प्रतिपादितम्। स राम कृष्ण रहीम करीमञ्चैकस्यैवेश्वरस्य रूप मनुते। रावेन लिखितमस्ति—

> रामस्य रहिमस्यापि नाम्नो प्रार्थनोत्तरम्।
> हृदये चेन्निरूढे वस्तदेतत्परम शुभम् ॥[2]

गान्धिना मनुष्येश्वरसम्बन्धो वैष्णवसम्प्रदायाधार स्थापित। गीताधारे हि स कथितवान् यत समस्तजीवा ईश्वरस्यावतारा सन्ति। ईश्वर प्रभुरस्ति, मनुष्यश्च तद्दास इत्येषा कल्पना नाधिका स्वस्थास्ति। ईश्वरे मनुष्ये चैकैव शक्ति विद्यमाना। य आत्मानुभूतिं प्रबुद्धा विधाय समताभावस्य दर्शन करोति, स ईश्वर पश्यति।

य विश्वस्य नैतिकसत्ताया नैतिकशासने च विश्वसिति, तस्यैवेश्वरे विश्वासो

---

१ स्वराज्यविजय—सौ० प० क्षमाराव, पृ०११० श्लो० २०
In search of the supreme Vol II, Page 70, 72, 72, 340
२. स्वराज्यविजय, पृ० १६०, पद्य ७

वर्त्तते । गान्धिदृष्ट्या नियमनियामकयोरैक्यमस्ति । यो नैतिकनियमे निष्ठावान् भवति स एवास्मिन् क्रियात्मके चेतने प्रेम्णि विश्वसिति, गान्धिन ईश्वरसम्बन्धी-विचार परमसुन्दरोऽध्यात्ममूलकश्चास्ति । यदि व्यक्ति कामयेत तदा स्वात्मनि साक्षात्कारमीश्वरस्य कर्तुं प्रभवेत् । ईश्वरस्य विश्वास एव मानवताया विश्वासोऽस्ति । अनेन लिखितम्—

"I believe in absolute oneness of god and therefore also of humanity what though we have many bodies? we have but one soul. The rays of the sun are many through refraction. But they have the same source."[1]

ईश्वरेच्छा विज्ञाय सदाचारे प्रवृत्ति मानवेभ्य आवश्यकी वर्त्तते । एतत्सदैवा-विस्मरणीयमस्ति यत् सत्यमीश्वरमेव सत्य गान्धी स्वीकृतवान् ।

## तत्त्वज्ञानम्

गान्धि-दर्शनानुसार मूलतत्त्व किमस्ति ? तत्सख्या च कियत्यस्ति ? एष प्रश्नो विचारणीयोऽस्ति। सतश्च सद्भाव असतश्चासद्भाव तत्त्वम्। योयथावस्थित पदार्थ स तथाभूत प्रत्ययोत्पत्तिनिमित्तम् । स्वतन्त्रास्वतन्त्रभेदेन द्विविध तत्त्वमिति द्वैतवा-दिन श्रीपूर्णप्रज्ञाचार्या वेदान्तिन प्राहु । सदसदुभयानुभयात्मकचतुष्कोणविनिर्मुक्त शून्यमेव तत्त्वमिति शून्यवादिनो बौद्धा । पृथिव्यादीनि चत्वारि भूतानि तत्त्वानी ति चार्वाका आहु । द्रव्याद्रव्यभेदेन द्विविध तत्त्वमिति रामानुजीया । पतिपशुपा-शेषु त्रिषु पदार्थेषु पृथिव्यादीनि पञ्च तत्त्वानीति पाशुपतशास्त्रकोविदा नकुली-शाचार्या । महदादीनि पञ्चविंशतितत्त्वानि इति निरीश्वरसाख्या । ईश्वराधिकानि तानीति षड्विंशतितत्त्वानीति सेश्वरसाख्या पतञ्जल्यादय । अशेषप्रत्यनीक चिन्मात्र ब्रह्मैकमेव तत्त्वमिति मायावादिनो वेदान्तिन । विलम्बित नृत्यवाद्यादि तत्त्वमिति नाट्यशास्त्रज्ञा आहु । चेत स्वरूप च तत्त्वमिति काव्यज्ञा कस्यापि मतस्य तत्त्व-लोकविमोक्षमुख्योपायमस्ति । अभिमत तत्त्वज्ञान यथार्थबोधसाधक नि श्रेयस-साधनञ्चेति बोध्यम ।

गान्धिना मलत एकसत्यमेव तत्त्व स्वीकृतम । इदमेव तत्त्व गान्धिप्रतिपादिताना-सर्वेषा सिद्धान्तानामाधारभूत वर्त्तते । अस्मादेव तत्त्वादहिंसातत्त्व निस्सृतमस्ति । अनयो प्रस्फोटनेन चत्वारि तत्त्वानि जातानि ।

---

१. Selections form gandhi, by N K Bose, Navajivan, 1957 तथा—हरिजन जुलाई, अगस्त, १९४० ई०

१ सत्यम् २ सत्याग्रह ३ अहिंसा ४ मोक्ष

गान्धिदृष्ट्या तत्त्वमिति प्रामाणिकोऽर्थो निगद्यते। तत्तत्त्व पर सत्य ब्रह्म परमात्मा सर्वेश्वर श्रीभगवान् नारायण इत्यादिभि पर्यायान्तरै गण्यते। सर्वे चेतनाचेतन-पदार्थास्तस्य विशेषणानि। तच्चैषा विशेष्यम्। अतएव मूलभूतमेक सत्यमेव तत्त्वमस्ति। उपर्युक्तानाञ्चतुर्णा तत्त्वाना स्फोटनेन चेतनाचेतनपदार्थाना विशिष्ट-ज्ञानार्थं सप्त तत्त्वानि जायन्ते। येषु तत्त्वेषु जीवनस्य समस्तार्थिकसामाजिक-व्यवस्था अवलम्बिता सन्ति।

( १ ) सत्यम्। ( २ ) सत्याग्रह। ( ३ ) आत्मा, ईश्वरश्च। ( ४ ) रचनात्मककार्यक्रम —आत्मविस्तार ( ५ ) श्रम ( ६ ) आत्मशुद्धयर्थं प्रार्थना ( ७ ) उपवास

गान्धि-दर्शनस्य यावदस्माकमध्ययनमस्ति, वयमेतद्वक्तु शक्नुमो यत गान्धि-दर्शने यथार्थत तत्त्वज्ञान नास्ति। इद तत्त्वज्ञान प्रकारविशेषेण जीवनशोधनस्य कार्यक्रममात्रमस्ति, अनेनैव कार्यक्रमेण मोक्षप्राप्तिरपि भविष्यतीत्यत्र नास्ति मना-गपि सन्देह। यतो हि यत्र सत्यमस्ति, तत्रैव शुद्ध ज्ञान विद्यते। अहिंसा, अस्तेय, ब्रह्मचर्यम्, अभयम, आस्वाद अपरिग्रहप्रभृतय सत्यस्यैव विस्तृतरूपाणि सन्ति। गान्धिमतेन सत्याहिंसे एकमेव वस्तु स्त। सत्य साधनमस्ति, अहिंसा च साध्यास्ति। यत्र सत्यमस्ति, तत्रेश्वरस्यापि वर्त्तते। सत्येन सदैव ज्ञानानन्दौ स्यातु शक्नुत। सत्य आनन्दश्च शाश्वतौ स्त। एतदेव कारणमस्ति यत् ईश्वर' सच्चिदानन्दोऽ-भिधीयते। सत्यशब्दस्य मूलम 'सत' अस्ति। सतोऽर्थोऽस्ति भवनम। अतएव सत्यार्थ उभयोर्भावो जात। अनेनैव हेतुना परमेश्वरस्य सत्य नाम सदथवा सत्योऽस्ति। गान्धी परमेश्वर सत्य सत्यञ्च परमेश्वर मनुते। स लिखितवान्— "साधारणतया सत्यार्थं वय सत्यभाषणमेव जानीम। परन्तु मया सत्यार्थ विशालार्थे प्रयुक्त। विचारे, कार्ये, वाचि आचारे, च सत्यमेवास्तु। एतत्सत्यस्य पूर्णतया ज्ञाने ससारे किमपि ज्ञातु नावशिष्यते। यत सम्पूर्ण ज्ञान अगच्चास्मिन् समाविष्टे स्त। सत्यमेवेन विश्वस्य कार्य कारणञ्चास्ति। सत्यादृते ऽन्यत्किमपि तत्त्वमूत नास्ति। ससारस्य रचनापि सत्येनैव भवति।"

"वस्तुत सत्य पारसमणिरूपमस्ति, कामधेनुरूपमस्ति च। एतत् कथ प्राप्येत? चेत्, एतस्य समाधान गीताया भगवता दत्तम्—अभ्यासेन वैराग्येण च। सत्ये सलग्न-ताभ्यासोऽस्ति तथा सत्य विनाऽन्यद्वस्तुभ्य आत्यन्तिकी उदासीनता वैराग्यमस्ति। अस्मिन् सत्यपि वय द्रक्ष्यामो यदेतस्य सत्यमन्यस्मा असत्य विद्यते। एतद्‌द्वयप्र-

ताया. नावश्यकता वर्त्तते । यत्र शुद्ध- प्रयत्नो वर्त्तते, तत्र भिन्नानि प्रतीयमानानि सर्वाणि सत्यानि वृक्षस्यैकस्यैवासंख्यातानि दृश्यमानानि पत्राणीव सन्ति ।"[1]

गान्धिन प्रत्येककार्यक्रमे सत्यस्य समावेशोऽस्ति । स समस्तसमस्यानां समाधानं सत्येनैव प्राप्नोति । सम्पूर्णसफलकर्मणा मूलेषु सत्यस्य स्थितिर्भवति । सत्यमेवैकमेतादृश तत्त्वमस्ति,. यत् परस्पर प्रेम्णो विश्वासस्याहिंसायश्च भावनामुत्पादयति । विश्वासाभावे एव संसारे दुराचारा अत्याचाराश्च भवन्ति । यत्र सत्यतत्त्वं तिष्ठति, तत्र सम्पूर्णं सङ्घटितजीवनं कार्यसम्पादने संलग्नं भवति । अनाचारस्य, भेदभावस्य, भयस्वार्थयोश्च त्याग सत्यं विना न सम्भाव्यते । सत्ये कार्यसम्पादनस्यापूर्वा योग्यता भवति । यत्र सत्यमस्ति, तत्राध्यात्मिकशक्तिरात्मबलञ्च पूर्णरूपेण निवसत.। सत्यमेव मनुष्यं वादेभ्यस्तर्केभ्यश्च दूरं करोति । भौतिकबलस्य पशुबलस्य वा निरोधोऽपि सत्येनैव सम्भवति ।

"गान्धिना लिखितम्—"सत्यशोधनेन तपश्चरणं जायते, अर्थात् सत्यानुष्ठाने स्वयं दुःखं सोढव्यं भवति । एतत्कृते मरणमपि वरणीयं भवति । सत्ये स्वार्थस्य गन्धोऽपि न तिष्ठति । एतादृशं निःस्वार्थं शोधं कुर्वन्नद्यावधि न कोऽपि तादृशो भूतो योऽन्तपर्यन्त कुमार्गं गतो भवेत् । सत्यानुष्ठानेन मुक्तिमार्गस्य प्राप्तिर्भवति, तेन जप-तपो-ध्यानादीनामुपयोगिता सत्याद्भिन्ना नास्ति । अतएव सत्यस्याराधना भक्तिरस्ति तथा भक्तिस्तु शिर पण्यमस्ति, अथवा सा हरिमार्गमस्ति । अतस्तस्या कातरताया आवश्यकता नास्ति । तस्या पराजयसदृशं किमप्यस्त्येव न हि । सत्यं मृतेऽपि जीवनमन्त्रोऽस्ति । गान्धिन एतत्तत्त्व परमव्यापकं वर्त्तते । एतत् स्वय परमेश्वररूपमस्ति । एतस्याराधनाऽहिंसया कर्त्तुं शक्यते ।"[2]

१. धर्मपथ, छात्रहितकारी पुस्तकमाला, दारागज, प्रयाग, सन् १९३३ ई०, पृ० १३२-१३३
Wit and Wishdom of Mahatma Gandhi, P 270-180
In search of the Supreme, Val I Page 20-35
The Mind of Mahatma Gandhi, Compiled by R. K. Prabhu and U. R. Ros, Madras, oxford University Press (1946), Page 150
Contemporary Indian philosophers, Allahbad Kitabistan (1947) Page 70-81
2. The Philosophy of Mahatma Gandni, Page 40-41
धर्मपथ, पृ० १३४

सत्यं व्यापकं जीवनव्यवस्थापकं साधनमस्ति । कथितम्—"The path of truth is as narrow as it is straight. Even so is that of ahimsa It is like balancing oneself on the edge of a sword By concentration an acrobat can walk on a rope But the concentration required to tread the path of truth and ahimsa is far greater The slightest inattention brings one tumbling to the ground One can realize truth and ahimsa by ceaseless striving "[1]

स्पष्टमेतद्यदहिंसा विना सत्यं कार्यसाधकं नास्ति । सत्यतत्त्वं मूलभूतं वर्तते। अस्मादेव सत्याग्रहः निस्सृतोऽस्ति ।

सत्याग्रहः

गान्धिनो जीवनोत्थापनस्य द्वितीयं तत्त्वं सत्याग्रहो विद्यते । एतज्जगज्जीवनञ्च दर्शनस्यैकावृत्तिरस्ति । वस्तुतः सत्याग्रहः आत्मशोधकस्तथा परशोधकोऽप्यस्ति । एषा सत्याहिंसासद्धी साधना वर्तते, या विना कमपि विकारं स्वविजयेन सह परविजयं प्रापयति । एतस्य सत्याग्रहस्यान्तिमध्येयं सत्यमस्ति । अस्माकं दृष्ट्या गान्धिनः सत्याग्रहतत्त्वस्यार्थाः सन्ति—प्रेम, कष्टसहिष्णुता, तथाहिंसया सत्योपलब्धिः । तपोऽहिंसया प्रेम्णाथवा सत्यपर्यन्तं गमनस्य मार्गोऽस्ति। एषा प्रेम्णः एतादृशी प्रवृत्तिरस्ति, या स्वसर्वस्वं प्रदाय सत्यं प्रापयति । कस्यापि पीडनम्, कष्टदानम् तिरस्कारः, क्रोधः एतदराज्याद् बहिः सन्ति । सत्याग्रहः सर्वेषां जीवानां समानरूपेण कल्याणं विदधाति । नैषा प्रतिघातिनी शक्तिः प्रत्युतात्मोन्मुखी वर्तते। प्रेम्णः त्यागस्य, आनन्दस्य, ऐक्यस्य, अध्यात्मनः—सर्वेषां समाहारः सत्याग्रहे भवति । मानवजातेः विकासः सत्याहिंसयोर्मार्गेणैव भवति । सत्याग्रहः सत्यमार्गमुद्घाटयति ।

*श्रीरङ्गनाथदिवाकरो लिखितवान्—"सत्याग्रहस्य विश्वासोऽस्ति, यत् मानवविकासः प्रेम्णि तथाहिंसायामेवावलम्बितोऽस्ति । सत्याग्रहो मनुते यत् नाधिकबाहुबलं, प्रत्युत नैतिकबलेन प्रेम्णा कष्टसहनेन चान्ते न्यायस्य विजयोऽपेक्ष्यते । एतत्स्पष्टमस्ति यत् सुखशान्तिदिश्यामेव मानवस्य विकासो जायते । सत्याग्रहस्य प्रकृतिः विधायिका विद्यते । अतो मानवीयप्रगतिमार्गेऽज्ञानस्यालस्यस्य, भीरुतायाः स्वामित्वस्य भावना, आक्रमण-शोषणयोः प्रवृत्तिः, महत्त्वाकाङ्क्षा, लालसा, सत्ता-*

---

१ Truth is God, P 32

लोभस्तथान्यानि काठिन्यानि सत्याग्रहादेव दूरीक्रियन्ते। उच्चकोटेः सरसतायाः, श्रेष्ठप्रकारस्य शान्तेः स्वर्गीयसुखस्य च दिक्षु मानवताया नेतुं विकासस्य नैसर्गिक प्रेरणाया एकस्मिन् एकाङ्कस्येऽविभाज्ये सत्याग्रहस्य कार्यं चलति।"[1]

मानवमनसः सूक्ष्माध्ययनेन तस्य नैसर्गिकप्रवृत्तेर्विश्लेषणेन च ज्ञायते यत् सत्याग्रह एकं शान्तिदायकमस्त्रमस्ति। एष सत्याग्रहः सग्रामात् सैनिकयुद्धेभ्यश्च विरतं करोति। सत्योपासकतया सत्याग्रही स्वजीवनस्य प्रत्येकक्षणं सत्यान्वेषणे यापयति। सत्याग्रही नम्रः परोपकारपरायणश्च भवति।[2] स सत्तालोभाद् दूरं गच्छति। तस्याचारविचारौ परिष्कृतौ भवतः। तस्य मार्गः एकस्य कर्मयोगिनो मार्गो भवति। तस्मिन्नहङ्कारात्याचारशोषणानीति तत्त्वानि न भवन्ति। सत्याग्रहिण उपास्यदेवः एकमात्रं सत्यमेव भवति। एतत्सत्यं प्रेम्णा, विश्वासेन चोपलभ्यते। अनुशासनस्य, संयमस्य, अनासक्तेः, स्वार्थत्यागस्य, शान्तेरेव धैर्यादिगुणानां तस्मिन् पूर्णं समवायः प्राप्यते। प्रेम विश्वासौ तस्य कार्यसिद्धेः मूलाधारौ स्तः। अतएव प्रेमसम्बन्धे लिखितमस्ति—"प्रेम मानवीयजीवनस्य सिद्धान्तोऽस्ति। प्रेमाधारेणैव समाजस्य रचना जाता। यद्येव नाभविष्यत्, तदा कोऽपि समाजोऽस्तित्वे नागमिष्यत् तथा मानवजातिरपीदानीं यावत् नष्टाभविष्यत्। प्रेम्णो द्वेषोपरि, अहिंसाया हिंसोपरि सृजनात्मकशक्तेः विनाशकशक्तेरुपरि प्रभुत्वेनैव जीवनं सुघटितं समृद्धं तथाखण्डं विद्यते। सत्यत्वेतदस्ति यद् जीवनस्योदय एव प्रेम्णो जातः। जीवनं प्रेम्णैव स्थितमस्ति तथा प्रेम्णैव तस्मै पूर्णता प्राप्यते। अतः प्रेममार्गस्यावलम्बनेनैव केवलं प्रेम्णोऽनुभूतिर्भवति। द्वेषहिंसयोः मार्गोऽसत्यमार्गोऽस्ति। एष मनुजजीवनस्य नियमो वर्त्तते। अहिंसाथवा प्रेम मानवीयसमाजस्य नियमो विद्यते। अतएव सत्याग्रही सत्यसाधनामहिंसया करोति।"[3]

गान्धिनः सिद्धान्तानुसारं सत्याग्रहिणो जीवनमात्मशुद्धेः, संयमस्य, सेवायाः स्वार्थत्यागस्यात्मसमर्पणस्य चाखण्डपिण्डो भवति। स मनुष्याणां सत्प्रवृत्तिषु निष्ठा

१ सत्याग्रह मीमांसा, सस्ता साहित्यमण्डल, नई दिल्ली, सन् १९४९, पृ० १९।

२ सत्याग्रही अन्याय का प्रतिकार शारीरिक बल से नहीं करता। वह तो उसे धैर्य से हँसमुख रहकर सहन करता है और इस प्रकार अन्यायी के हृदय को स्पर्श करने की कोशिश करता है। वह अन्याय और अन्यायी में बड़ा अन्तर मानता है। दुःख और कष्ट को मिटाने का प्रयत्न करते हुए वह अन्यायी को अन्याय का अनुभव कराने का प्रयत्न करता है।—सत्याग्रहमीमांसा, पृ० ९

३ सत्याग्रहमीमांसा, पृष्ठ ५१।

करोति। स्वलक्ष्यं प्रति सत्याग्रहादम्यं विश्वासं विदधाति। स स्वयमेवात्मपरीक्षणेनात्मवृत्तीनां मननं परीक्षणं परिष्करणञ्च करोति।

सत्याग्रह एक एतादृशस्तन्त्रोऽस्ति, यदर्थमनेकगुणानां सद्भाव आवश्यकोऽस्ति। महात्मगान्धिनैतस्य तन्त्रस्य षट् प्रमुखसिद्धान्ता प्रतिपादितास्सन्ति।

( १ ) सत्याग्रहस्य कारणं न्यायोचितं सत्यञ्च भवेत्।

( २ ) यदा मन्धिमार्गः पूर्णतयाऽसफलो भवेत्, तदा सत्याग्रहस्यावलम्बनं कार्यम्।

( ३ ) विरोधिने स्वदोषपरिमार्जनाय पूर्णोऽवसरो देयः।

( ४ ) सत्ये तथेश्वरे पूर्णं विश्वासं विधाय कष्टसहनास्यनेनाहिंसामार्गेण प्रतिकारो विधेयः।

( ५ ) नम्रतापूर्वकं स्वसिद्धान्तस्य सन्धिं विना परित्यागो न विधेयः।

( ६ ) कष्टसहनं विना कमपि कलहं विसंवादं प्रसन्नतया सह्यं स्यात्।

सत्याग्रहिण्य निम्नलिखितगुणानां सद्भावोऽप्यावश्यको विद्यते।[1]

( अ ) निर्भयता

( आ ) वीरता

( इ ) धैर्यं दृढता च

( ई ) आत्मशुद्धिकृते उपवासादि

( उ ) संयम

( ऊ ) प्रेम-विनयादि

जीवनसफलताप्राप्तेरेष सिद्धान्तो गान्धिनैतादृशः स्वीकृतः, यः सत्यपर्यन्तं प्रापयति। सत्यान्निसृतमिदं तत्त्वं सत्यसाधकमात्मशोधकञ्चास्ति।

आत्मन ईश्वरस्य च विश्वासः

गान्धिनात्मन ईश्वरस्य च विश्वासः जीवनविकासार्थमावश्यकः स्वीकृतः।

---

१ सत्यका उपासक होनेके कारण सत्याग्रही अपने जीवनका प्रत्येक क्षण सत्य की खोजमें लगाता है और प्रेममय जीवन होनेके कारण वह दूसरोंका हित-करनेमें मग्न रहता है। यह सब करना मानो उसका स्वभाव धर्म ही हो जाता है। वह विनम्र परोपकारी और मिलनसार होता है। और वह जिस समाजमें रहता है तथा जिनके साथ उसका सम्बन्ध होता है, उनके हित के लिए सदैव प्रयत्नशील रहता है।

—सत्याग्रहमीमांसा, पृ० ४०

य सामाजिकेषु राजनैतिकेषु च कार्येषु सफलता प्राप्तुं समीहते, तस्मै बाह्याचरणापेक्षयान्तरिकशुद्धेरधिकावश्यकता भवति।

आत्मन ईश्वरस्य च विश्वास मानवाय प्रत्येककार्ये साफल्य प्रयच्छति। य स्वस्मिन् न विश्वसिति, स आत्मशक्ति विकसिता कर्तुं न शक्नोति। मानसिक श्रम आत्मविश्वास विना सफलो न भवति। य स्वान्तरङ्गशक्तौ विश्वसिति, स एव सफलताप्राप्तेरधिकार्यस्ति। स्वातन्त्र्यस्य मूलमन्त्र आत्मविश्वास एवास्ति। आत्मविश्वासाभावे मनुष्य कस्मिश्चिदपि कार्ये दक्षो भवितु नार्हति। दक्षताप्राप्तिनियमेषु सर्वप्रथमो नियम आत्मविश्वास एवास्ति। यदा प्रबल आक्रमणकारी आत्मन्याक्रमण करोति, तदाहिंसात्मकप्रतिरोधस्य विश्वास एव तस्मादाक्रमणात् रक्षति। यत्रात्मविश्वासस्यालोको भवति, तत्र प्रेम, सहानुभूति, सरलता च स्वयमेवोपस्थिता भवन्ति। आत्मविश्वासेनैव दयाया सहानुभूतेश्च विकासो जायते। दयया मनुष्ये बन्धुत्वस्यैकतायाश्च भावना जागर्ति। सहिष्णुताया नम्रतायाश्चोत्पत्तिरात्मविश्वासभावेनैव भवितुमर्हति। अतएव गान्धिना सफलताया मार्ग आत्मविश्वास ईश्वरविश्वासो वा स्वीकृत।

जीवने निर्भयताया विकासोऽपि आत्मविश्वासेनैव भवति। अयमात्मविश्वासः दार्शनिकभाषाया सम्यग्दर्शनमभिधीयते। अह कर्ता, भोक्ता चेत्यस्य प्रतीति आत्मनि जागरण कर्तुं शक्नोति। मोक्षमार्गदृष्ट्या आत्माशुद्धिकारण मिथ्यात्व स्वश्रद्धाभावोवेति चिन्तनीयम्। आत्मालोचनेनोक्ता प्रतीतिरात्मनि सजायते।

आत्मप्रतीत्यभावे न सामान्यत साक्षात्कारस्य कारणत्वप्रयत्नेच्छयोर्वा, प्रमाणाभावात्, चेष्टादिनाऽन्यथासिद्धे। व्यापारेण व्यापारिणो नान्यथासिद्धिरिति प्रवादस्तु यत्र व्यापारिकारणताग्रहाधीनेव व्यापारसिद्धिस्तद्विषयक एव। अतएवानुमानेनात्मप्रतीति कार्यसाधिका सिद्धयत्येव। तथापि—आत्मनिष्ठैव कार्यसाधिका सत्याहिंसासाधनान्यथानुपपत्ते। अस्मिन्ननुमाने हेतु असिद्धविरुद्धादिदोषैरहित, तेन स्वसाध्य साधयत्येव।

अत्रेय विचारणीया वार्त्ता यदात्मविश्वासाभावे प्रमातृप्रमाणादेरपि असत्वे शास्त्रादेरपि मिथ्यात्वे कथ तेभ्य परमपदमतिरुपपद्यत इति चेद् विमृश्यताम्। अत्रेद भवान् प्रष्टव्य किं प्रमात्रादेरसत्यत्वे तत परमपदसिद्धिर्न भवतीत्युच्यते, किं वा भवन्त्यपि सा वास्तवी न भवतीति, किं वाऽविद्याप्रतिबन्धनिवृत्तिरूपा वा ? भवतीति। नाद्य, यतो हि सच्चिदानन्दरूपमात्मतत्त्वमेव प्रमितिर्यत्र स प्रत्यक् प्रमाणक, तत्रान्येषामपेक्षाविरहात्तत्स्फुरणे बाधाभावात्। अत आत्मप्रतीतिरतीवावश्यका पारमार्थिकफलानुपपत्ते।

(१) जातीयैकता (२) अस्पृश्यतानिवारणम् (३) मद्यपाननिषेध (४) हस्तनिर्मितवासोव्यवहारः (खादी-धारणम) (५) ग्रामोद्योग (६) ग्रामस्वास्थ्यम् (७) नवीना शिक्षायोजना (८) प्रौढशिक्षा, साक्षरता-प्रचारश्च (ज्ञानप्रचार) (९) नारीणामुन्नति (१०) ग्रामसेवा। (११) आर्थिकसमता। जनानामुन्नति (१२) निम्नश्रेण्या दलितश्रेण्याश्च विद्यमानाना (सर्वाङ्गीणविकास)। (१३) कृषकेषु श्रमिकेषु च जागरणम्। (१४) आत्मालोचनम्। (१५) जाति-वर्गभेदादीनामुन्मूलनम्।

समाजे प्रचलितमूल्याना पुनर्घटन रचनात्मककार्यक्रमद्वारेणैव सम्भाव्यते। एतत्सत्यमस्ति यद् रचनात्मककार्यक्रमस्य मले क्रान्ति समाहिता भवति। क्रान्ति विना न नवीनसमाजस्य निर्माण भविष्यति, न प्राचीनमूल्याना स्थापनैव। मौलिक प्रतिभाशाली जन कामपि क्रान्ति गृहीत्वैवोत्पन्नो भवति। स च समाजे यथेष्ट परिवर्त्तन करोति। न्यायस्य, समतायाः मानवाधिकारस्य च भावना व्यक्ति-समाज-राष्ट्राणा जीवन परावर्त्तयति। मानवहृदये यदा मानवस्य मौलिकाधिकाराणा विश्वासो भवति तदा स क्रान्तिमार्गेऽग्रसरो भूत्वा नवीन कार्यक्रम समुपस्थापयति।

मनुष्यस्य भूषणभूता चेष्टास्तथा तस्यात्मालोचनस्य प्रक्रिया स क्रान्तिमार्गेऽग्रसर कुर्वन्ति। एतत्सत्यात् कोऽपि विमुखो भवितुं न शक्नोति, यत् दाता-दौष्म्य आगच्छन्त सामाजिकदोषा समाजे विषमता दरिद्रता स्वार्थबुद्धिमनीतिश्च जनयन्ति, येन जनतायाः शारीरिको बौद्धिको नैतिकश्च विकासोऽवरुद्धो भवति। अत-एव क्रान्तिजन्मन पश्चादेव रचनात्मककार्यक्रमाणा प्रारम्भो भवति तथैव रचनात्मककार्यक्रमा समाजस्यार्थनीत्यामाचारनीत्याश्च परिवर्त्तन कुर्वन्ति।

गान्धिना भारतवर्षस्य नवनिर्माणे समाजकल्याणे च रचनात्मककार्यक्रमाय तत्त्वस्वरूप दत्तम्। समाजस्य प्रत्येकव्यवस्था तत्त्वत रचनात्मककार्यक्रमेणैव सम्भवति। अनेनैव कारणेन गान्धिमहोदय मानवस्य समाजस्य च गम्भीराध्ययन कृतवान्। स व्यक्ति-समाजयोर्जीवने लोकमङ्गलस्य दर्शन करोति। गान्धिसिद्धान्तैराधुनिकय सर्वा अपि समस्या समाहिता सन्ति। पूर्वोक्तरचनात्मककार्यक्रमेषु नवीन समाज संस्थापितो भवेत्। अस्य विशिष्टकार्यभारस्य निर्वाहस्तु गान्धिमहोदयेन कृत।

श्रम

गान्धी जीवनविकासाय श्रममावश्यकतत्त्व स्वीकृतवान्। यो जन श्रम विनैव सामाजिकसौविध्यानि प्राप्नोति, स समाज प्रति तस्करोऽस्ति। सामाजिक श्रमोऽस्माक कर्त्तव्यमस्ति। एषोऽस्मभ्य प्रकृत्या दत्तो विद्यते। अतएव स्वजीवन व्यव-

स्थितं विधातुं तथा मानसिकाध्यात्मिकदाढर्याय पूर्णतयोपभोगाय शारीरिक श्रमोऽपेक्षितो वर्त्तते। कृषिकार्यम्, तातवधक्रचाल्नमन्यस्मिश्च कस्मिंश्चिदप्युद्योगे प्रवृत्ति जीवनयापनेऽस्ति। गान्धी शारीरिकश्रमाय विशेष महत्त्वमददात्। स लिखितवान्—"यज्ञार्थं शारीरिकश्रमोऽथवा रोटिकाभृतिश्चोपयुक्ता प्रतीयते। त्वं स्वरोटिका स्वेदञ्च वाहयित्वा श्रम कुरु खाद च। शारीरिकश्रम सर्वस्मै परमावश्यक"[1]

मलपरिष्कार गृहादिकस्य परिमार्जन श्रमान्तर्गतमस्ति। यो मनुष्य शारीरिकश्रम विना जीवनयापन करोति, तस्य जीवनमहिंसक न मन्यते। अहिंसाया व्यवहार शारीरिकश्रमेऽवलम्बितोऽस्ति। श्रमेणैव जन सफलता प्राप्नोति तथा श्रमेणैव सेवावृत्ति पुष्टा भवति। अतो जीवनोत्थानाय श्रमस्य तत्त्वरूपेण स्वीकरण परमावश्यकमस्ति। श्रमादेव निर्भयतायाति तथा श्रमिक एव प्रेम्ण सद्भावनायाश्च व्यवहार करोति। श्रमे भगवतो निवासो वर्त्तते। य भोग परित्यज्य पारमार्थिकसेवावृत्तौ सलग्नो भवति, स भगवद्भक्तोऽस्ति, पूजनीयोऽपि च विद्यते।

गान्धिनोऽभिमतमस्ति यत् नि स्वार्थं श्रम कुर्वन्नेव जन भगवदनुग्रहमवाप्नोति। य विना श्रम तयानुत्पादितमन्न गृह्णाति, स दण्डनीयो विद्यते। श्रमो जीवनविकासायानिवार्यतत्त्वमस्ति।

## प्रार्थना

प्रार्थनाया महत्त्व जीवनविकासाय सर्वाधिकमस्ति। गान्धिदृष्ट्या प्रार्थनाया परिभाषा काचिदन्यैव वर्त्तते। स लिखितवान्—"प्रार्थनाया सर्वोत्तम प्रकार क भवितु शक्नोति? तस्या कियान् समय यापनीय? मम मतेन तु न्यायकरणमेवोत्तमप्रकारा प्रार्थना विद्यते यो मनुष्य सर्वे सह न्यायार्थं सत्यहृदयेन तत्परो भवति तस्मै नान्याया प्रार्थनाया आवश्यकतास्ति। कियन्त सन्ध्यायामधिक समय यापयन्ति, परन्त्वधिका जना एवविधा सन्ति, ये तदर्थमपि नावगच्छन्ति। मम मतेन तु मातृभाषायामेव प्रार्थना विधेया, तस्या एवात्मनि प्रभावो लक्ष्यते। अहन्तु कथयाम्येतदपि यत् सत्या प्रार्थना यदि क्षणपर्यन्तमपि क्रियते, तदा सापि पर्याप्ता भविष्यति।"[2]

स्पष्टमस्ति यत गान्धिदृष्ट्या न्याय श्रम सयतजीवनयापन वा प्रार्थनान्तर्गतमस्ति। प्रार्थनाया पवित्रतोत्पद्यते। प्रार्थनाया आत्मविश्वास कार्यक्षमता चोत्पद्येते। गान्धी आत्मशुद्ध्यै प्रार्थना साधनभूता मनुते। तस्याभिमतमस्ति यत् प्रार्थना याच्ञा

---

१. धर्मपथ, पृ० १६१

२ धर्मपथ, पृष्ठ २३।

नास्ति, एषा आत्मन आह्वानमस्ति। वैयक्तिक्या प्रार्थनया सह सामूहिकी प्रार्थनाप्यपेक्षिता वर्तते। अत प्रार्थनैकमेतादृश तत्त्वमस्ति, यज्जीवनेऽनुशासन विश्वास स्वावलम्बनञ्चोत्पादयति।

गान्धिसिद्धान्तोऽस्ति—"Religion, in the opinion of Gandhi, is a friend of libreralism and a foe to fanaticism It is conquest of passion and quest for compassion Religion wears equation with his Maker It is to become what he is By religion, Gandhi means to cognize the self (आत्मा), to recognize the cosmic self (परमात्मा), to realize Reality, to see God face to face, to attain Moksa through service to man"[1]

स्पष्टमेतद्यत् मानवसेवाया रूपान्तरं प्रार्थना विद्यते। य मानवसेवा करोति, स सेवाश्रमरूपप्रार्थनया स्वकार्यमचिरेणैव साधयति। मोक्षप्राप्तिरपि सेवारूपप्रार्थनया सहज सम्भवतीत्यत्र नास्ति कोऽपि विवाद।

## उपवास

उपवास शरीरशुद्धयर्थं परमावश्यकतत्त्वमस्ति। उपवासेन विकाराणा शमन भवति। आत्मोत्थानस्य मार्ग उपलभ्यते। गान्धिनोपवास जीवनशोधनार्थं स्वीकृत। तथाहि—उपवास आवश्यकं तत्त्व जीवनशोधनसम्भवात्। अनेनैवहिंसाया सत्यस्य च प्राप्तिर्भवति। उपवासविषये गान्धिसाहित्येऽधिकाधिको विचारो लभ्यते। अस्माक दृष्टया जीवनशोधनप्रक्रियाचारविशेषेणाभिमतत्वात्तत्त्वशब्देनोच्यते, वस्तुत तत्त्वस्यार्थैतादृशोऽर्थो न विद्यते, यादृश आकाशजलादीना मूलभूताना पदार्थानामर्थो विद्यते। अत्रेद विचारणीय यदुपवासकारणसत्त्वे आत्मशुद्धि कार्यसत्त्वमिति यावत्।[2]

---

1 Gandhi Marg, July 1969, Page 211
Truth is God, Navajivan Publishing House (1959) Page 5 तथा—
The mind of Mahatma Gandhi, Page 175-178

२ उपवास शब्द का अर्थ ही है भगवान् के पास बैठना। इसलिए कि परमात्मा के नजदीक हमारा चित्त रहे, बाहरी भोगों का दरवाजा बन्द करने की जरूरत है। परन्तु बाहर से विषयभोगों को छोडकर यदि मन में भगवान् का चिन्तन न होता, तो फिर इस बाहरी उपवास की क्या कीमत रही?

उपवासकारणाभावे आत्मशुद्धिरूपकार्याभाव दृश्यते । अतोऽन्वयव्यतिरेकाभ्या सह-कारित्वेनोपवासस्यावश्यकता सिध्यति । उपवास. ज्ञानसाधकमपि भवति । ज्ञान-व्यक्ते उपवासव्यक्तिो भेदाभावेऽपि विज्ञानत्व-प्रमात्वधर्मयोरभेदात् । तथा च घटत्वस्य पृथिवीत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधन इवोपवासस्य विज्ञानत्वप्रयोज-कातिरिक्तप्रयोजकत्वसाधने बाधाभावात् । उपवास आत्मशुद्धिकारणाद्विज्ञानं जन-यति, विपक्षे बाधकाभावात् । उपवसन् व्यक्ति आत्मशुद्धि लभते, तेन ज्ञानमुत्पा-दयति । अनेनैव कारणेनोपवास पृथग्भूत तत्त्वं स्वीकृतम् ।

## नीतिविज्ञानमाचारदर्शनञ्च

महात्मा गान्धी नैतिकचेतना नैतिकीमनुभूति वा व्यक्ता कर्त्तुमाचारं विस्तार-पूर्वक निरूपितवान् नैतिकचेतनाया आशय शुभोऽशुभ , उचितोऽनुचित , वाञ्छनीयो-ऽवाञ्छनीय आदिरस्ति । एता अनुभूतय सार्वभौमा सन्ति । स्वरुचिसंस्कृत्यनुसारं सदसदोश्चेतनाऽस्माकं सर्वेषा भवति । अतो नैतिकविज्ञानं नैतिकनिर्णयानामध्ययनं कृत्वा नैतिकचेतनाया युक्तिसङ्गता व्याख्या करोतितथा तस्या सार्थकता स्थिरा करोति । महात्मा गान्धी स्वाचारस्य व्याख्यार्थं नैतिकताया मानदण्डं स्थिरं कृत-वान् तथा तस्य मानदण्डस्यानुकूलमेव कर्त्तव्याकर्त्तव्यो समीक्षा कृतवान् । शुश्रूषा-श्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशा हि नैतिकाचारानुष्ठानेन प्राप्नुवन्ति । सर्वसुखपरिपूर्ण मोक्षसुखमपि नीतिविज्ञान विना न प्राप्नोति कश्चिज्जन. । विप-रीताभिनिवेशविविक्तमात्मन स्वरूपमपि न कोऽपि लभते सदाचारेण विना । नैतिकानुष्ठानेनैव मनुष्यस्य कर्त्तव्यपरिज्ञान भवति तथान्तरङ्गमलानामपि परिशालनं सम्भवति ।

अलौकिकाविगीतशिष्टाचारविषयत्वन्नैतिकविज्ञान आत्मशोधकमस्ति विद्वेष-रागरहितत्वात् । शरीरेण प्रशस्तानि दानपरपरित्राणादीनि कर्माण्याचरति । वाचा हितसत्यादीनि । मनसाजिघांसादीनि। सेयमात्मशोधनरूपा प्रवृत्ति आचारदर्शन-मिति गान्धिनाभिमतम् ।

---

ईश्वर का चिन्तन न करते हुए यदि उस समय खाने-पीने की चीजों का चिन्तन करें तो फिर बडा ही भयंकर भोजन हो गया। यह जो मन से भोजन हुआ, मन में विषय चिन्तन रहा, इससे बढकर भयकर वस्तु दूसरी नहीं ।
—गीता प्रवचन, विनोबा भावे, सस्ता साहित्य मंडल
( सन् १९५२ ), पृ० ४६-४७

गान्धिन आचारदर्शनं सत्याहिंसाब्रह्मचर्यास्वादास्तेयापरिग्रहाभयेषु[1] समव्रतेषु वैरादशव्रतेषु विभक्तमस्ति । तेनैते सममहाव्रतसंज्ञयाप्यभिहिता । निस्सन्देह जीवन-समाजयो राष्ट्रस्य चोत्थानाय चोक्तव्रतमूल्काचारस्य पालनमावश्यकमस्ति । गान्धिना प्रकृति-मानवयोर्भयो क्रूरताना निराकरणस्य प्रयत्न कृत । तस्याहिंसासिद्धान्त केवल व्यक्तेरेव शोधन न करोत्यपितु समाजराष्ट्रयोर्मध्येऽप्यात्मीयता स्थापयति । गान्धिनो मतमस्ति, यत् समूह विना व्यक्ति नापि नास्ति तथा कोऽपि समूह व्यक्ति विनान्येन केनापि सह चलितु न शक्नोति । यदि समूहस्य व्यवहारो धन्यो हिंसको यान्ति तदा तस्य प्रतिकूल प्रभाव व्यक्ते सामाजिकजीवने तथा सामान्ये सदाचारे नोत्याश्चावश्यमेव पतति । मानवता तदानीमेव सभ्या सती स्थास्यति, यदा तस्या द्वावपि पक्षौ व्यक्ति समूहश्चाथवा सामाजिक राजनैतिकश्च सभ्यौ भवेताम् । सदाचारी जनो दुराचारो समाजश्चाधिकदिनानिपर्यन्त सहैव नहि चलितु शक्नुत । वैयक्तिकप्रगत्या सामाजिकप्रगत्या च सह यदि समूहगता राजनैतिकदुर्गतिगामिता चलन्ती तिष्ठेत्, तदा स्थिरोन्नतिकृत आवश्यक सन्तुलन नष्ट भविष्यति । गान्धिमहोदयोऽहिंसाव्याख्या धर्मशिक्षकरूपेण न कृतवान्, प्रत्युतैकस्य विचारकस्य क्रान्तिद्रष्टु रूपेण कृतवान् ।

धर्माचार्या यत्राहिंसाया सम्बन्ध केवलवैयक्तिकजीवनेन सह स्वीकृतवन्त, गान्धी तस्या सम्बन्ध समाजेन राजनीत्या च सह योजितवान् । प्रेम, विश्वास निष्ठा चाहिंसाया प्रतिरूपाणि सन्ति । आचार्यकृपलानीमहोदय महात्मगान्धिनोऽहिंसाया व्याख्या कुर्वंल्लिखितवान्—"स्वश्रद्धाया, स्वदेशस्य प्रतिभापरम्पराणाञ्चानुकूल गान्धी विश्वशान्तिकृते एकस्या योजनाया एवस्य तत्त्वज्ञानस्य च निर्माण कुर्वन्नस्ति । तस्य विश्वासोऽस्ति यद् यथाहिंसया, सत्येन च व्यक्ते सामाजिकसम्बन्धेषु सा सभ्या निर्मिता, तया तेनैवचान्त सामूहिकसम्बन्धानामन्ताराष्ट्रियसम्बन्धानाञ्च मार्गदर्शन विधेयम् । आसीत् कश्चन समय एतादृशो यत् वैयक्तिकी हिंसा कदाचित् व्यक्ते समस्याना समाधानमकरोत् । वैयक्तिकप्रतिहिंसा द्वारेण तस्यैकमात्रन्यायप्राप्ते सम्भावनासीत् ।

१ तुलनीयम्—

हिंसाऽनृतस्तेयाऽब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ।—तत्त्व सूत्रम् ७।१
व्रतमभिसन्धिकृतो नियम । बुद्धिपूर्वकपरिणामोऽभिसन्धि, इदमेवेत्थमेव वा कर्त्तव्यमित्यन्यनिवृत्ति नियम, अभिसन्धिना कृत अभिसन्धिकृत सर्वत्र व्रतव्यपदेशभाग् भवति ।—

परमद्यतनयुगे गान्धी सामूहिकविकासेऽप्यहिंसाया प्रयोगमनिवार्यं मनुते। कर्त्तव्यपालन विना कामपि दुर्भावना सत्यमभयाऽहिंसात्मिकया च रीत्यावश्यकमस्ति।"[1]

चिराद् विच्छिन्नाया भारतीयसमाजव्यवस्याया सन्धानं वैयक्तिक-सामाजिक-नैतिकाचरणेनैव सम्भवति। अनेनैव सिद्धान्तेनाधुनिक्य सर्वाअपि समस्या समाहिता स्यु, तद् द्वारैव वास्तुवं दर्शनमपि सदुदभवेत्, यस्य पवित्रताया यथार्थभूताया च भूमिकाया नवीन समाज संस्थापितो भवेत्। अस्य विशिष्टकार्यभारस्य निर्वाहस्तु नैतिकानुष्ठानेन विधेय। एतदर्थं तत्त्वचिन्तनस्य स्वत नता-प्रवृत्तिर्नूनमुद्बोधयितव्या। अत सामाजिकजीवनोपजीव्यदार्शनिकतत्त्वानामाकलन गान्धिना कृतम्।

सत्यादहिंसाया उत्पत्तिर्भवति। गान्ध्यहिंसानन्तर ब्रह्मचर्याय महत्त्वमददात्। यतो ब्रह्मचर्यस्य सम्पूर्णपालन महिंसाचरण विना शक्य न भविष्यति। सर्वव्यापिने प्रेम्णे ब्रह्मचर्यमपेक्षितमस्ति। य कुटुम्ब सृष्टवान्, एतादृशो जन व्यापक प्रेमकर्तु न शक्नोति। व्यापकप्रेमकृते "वसुधैव कुटुम्बकम्" इति सिद्धान्तस्यावश्यकता विद्यते। मनसो वाच शीलस्य च निर्विकाररक्षण कर्त्तव्यपालने सदा सलग्नता च ब्रह्मचर्यान्तर्गतमायात। गान्धी लिखितवान्—"यदि वय मनोऽधीना भवेम, तदा शरीर-मनसो विरोधो जायते, मिथ्याचारस्य कदाचारस्य वा प्रारम्भो भवति। पर वक्तु शक्यते यत् याव मनोविकार निरुद्धो भवति, तावत् उभयो सहैव गमन भवति।"[1]

---

तत्त्वार्थवार्तिकम्—भारतीय ज्ञानपीठ काशी, प्रथम संस्करण, पृ० ५३३, ७।१।२
एवमिहापि य एव मनुष्य प्रेक्षापूर्वकारी स पश्यति य एते हिंसादय परिणामा पापहेतव पापकर्मणि च प्रवर्तमानमिहैव राजानो दण्डयन्ति परत्र च बहुविध दु समवाप्नोतीति स्वबुद्धया सम्प्राप्य निवर्तते।

—वही, पृ० ३३,७।१।५

१ गान्धीमार्ग, साधनासदन, इलाहाबाद (१९४७ ई०), पृ० ८९

२ धर्मपथ, छात्रहितकारी पुस्तकालय, मारागञ्ज, प्रयाग, सन् १९३३, पृ० १४१
तुलनीयम्—
अहिंसादिगुणबृंहणाद् ब्रह्म—अहिंसादयो गुणा यस्मिन परिपाल्यमाने बृंहन्ति वृद्धिमुपयन्ति तद् ब्रह्मेत्युच्यते, न ब्रह्म अब्रह्म। कि तत्? मैथुनम्। तत्र हिंसादयो दोषा पुष्यन्ति। यस्मात् मैथुनसेवनप्रवण स्थास्नूञ्चरिष्णून् प्राणिनो हिनस्ति मृषावादमाचष्टे अदत्तमादत्ते सचेतनमितर च परिग्रहं गृह्णाति।—तत्त्वार्थवार्तिक ७।१६।१०, पृ० ५४४।

गान्धी विषयेन्द्रियविजेतारं ब्रह्मचारिणमलौकिकशक्तिशालिन मनुते तथैतादृश. ब्रह्मचार्य्येव स्वविकास कृत्वा समाज व्यवस्थित कर्तुं शक्नोति । गान्धी ब्रह्मचर्य-लाभाना विचारपूर्वक विवेचन विहितवान् । तस्याभिमतमस्ति—"संयमादुत्पद्य-मानस्य रोगस्य कस्यापि कोऽपि नाम वक्तु न क्षमते । परमसंयतविषयभोगेभ्य उत्पद्यमानाना भयङ्कररव्याधीना नामानि को न जानाति । शरीरन्तु विकृतं वस्तु जायमानमस्त्येव, कल्पनाशक्ते, हृदयस्य बुद्धेश्च दशा नितान्त भ्रष्टा जायते । दिशि दिशि चरित्रपतनम्, युवकानामुद्दामवासना, स्वार्थपरतायाश्च वृद्धे रोदनं श्रूयते ।[1]"

गान्धी जीवनोत्थानाय सयममावश्यक मनुते। यस्मिन् संयमस्य प्रकाशो विद्यते, स स्वचरित्रबलद्वारेण समाजस्य देशस्य च प्रवाहं परिवर्तयति । ब्रह्मचारिण स्वभाव सन्यासिनो भवति । तस्मै सम्पूर्ण विश्वं समानं दृश्यते । स समदृष्टिरस्ति तथा विश्वप्रेमद्वारेण समाजाय नवीना गतिविधिं ददाति । ब्रह्मचर्यस्यामिता शक्ति-रस्ति । विकाराणा वशीकरणे समर्थो जन जितेन्द्रियो भूत्वा पर शक्तिशाली भवति । वस्तुत समस्तविकाराणा मूल कामवासना वर्तते । येनैषा वासना विजिता, स सर्वेभ्योऽन्यायेभ्योऽत्याचारेभ्यश्च मुक्तो भवति ।

ब्रह्मचर्यस्य सहायकोऽस्वादव्रतोऽस्ति । यदस्य व्रतस्य सम्यक् पालनं क्रियते, तदा जीवने सयमोपलब्धिरसम्भवा नास्ति । अस्वादस्यार्थोऽस्ति भोजनकाले-ऽस्वाद्यपदार्थानामस्वादनम् । यथौषधसेवनकाले औषधस्य स्वादापेक्षा न भवति, तथैव शरीरस्यावश्यकता मत्वा भोजन कुर्वन्नपि स्वादापेक्षा न विधेया। य भोजनेऽ-सक्तो भूत्वा तत् स्वाद्यते, तस्यैव व्रतो भग्नो भवति । जिह्वेन्द्रियस्य दासताया अर्थोऽस्ति समस्तेन्द्रियाणा दासता । य स्वाद विजितवान्, सोऽहिंसाया, सत्य-ब्रह्मचर्ययोरपि सम्यक् पालन कर्तुं शक्नोति ।

स्वादजय साधारणो नास्ति । सामाजिकजीवनक्रिया-प्रतिक्रियाणा कृते इन्द्रियजयित्वमावश्यकमस्ति । गान्धी लिखितवान्—"मम स्वानुभवस्तु एषोऽस्ति, य जिह्वा न विजितवान्, स विषयवासना जेतु न शक्नोति, जिह्वाजय परम-कठिनोऽस्ति । विजिताया जिह्वायामन्यविजयो लभ्यते । जिह्वाविजयस्यैक उपाय एषोऽस्ति यद् यथाशक्तिमरिचादिसेवनस्य परित्याग विधेय । द्वितीयोऽप्तोऽपि बलवानुपायोऽस्ति, यन्मनसि सदैव भावो रक्षणीय यद् वय यद् खादाम, तत्सर्वं शरीरपोषणार्थमेव । स्वादार्थं वय कदापि भोजन न कुर्म । वय स्वादार्थ न

१. आत्मसंयम, सस्ता साहित्यमण्डल, नई दिल्ली, १९६० ई०, पृ० ३२ ।
तुलनीय—हस्तपादपुद्गलसंघट्टनादिभिरब्रह्म सेवमाने—तत्त्वार्थवार्तिक ७।१६।५, पृ० ९४३

पिबाम. । प्रत्युत जीवनधारणार्थं जलं पिबाम । जलमपि यथा तृषाशमनार्थमेव पीयते तथैवान्नमपि केवलं बुभुक्षाशमनार्थमेव ग्राह्यम् ।[1]"

गान्ध्यस्वादमहाव्रतं परं प्रशंसितवान् । तेन स व्रत- जीवनशोधनस्य सुन्दरोपायः कथित । एतस्य व्रतस्य सर्वोत्कृष्टलाभस्तु एषोऽस्ति यन्मनुष्योऽभक्ष्यभक्षणस्य त्यागं करोति, मिताहारश्च जायते । मिताहार. स्वास्थ्यरक्षाया उपायस्त्वस्त्येव, जीवनयापनस्यापि मार्गोऽस्ति । गीतायां कथितमस्ति—

विषया: विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥[2]

## अस्तेयम्

अस्तेयेन सत्यस्यास्तित्वबुद्धेरहिंसाया विश्वप्रेम्णश्च पालनं भवति । गान्धिना लिखितम्—"मनुष्य. स्ववस्तून्यपि चोरयति । उदाहरणार्थं कस्यापि पितुः स्वबालकानामज्ञाने–परोक्षे वा कस्यापि वस्तुन खादनम् । एतद् वक्तुं शक्यते यद् आश्रमस्य वस्तु भाण्डागारं सर्वेषामस्माकमस्ति । परन्तु तस्मादनिवेद्य गुडखण्डमपि यदि कश्चन गृह्णाति तदा स चौरोऽस्ति । एक बालक द्वितीयस्य बालकस्य कलमं दृष्ट्वा चोरयति " ' 'यस्य वस्तुनो ग्रहणस्यास्माकमावश्यकता न भवेत् तस्य ग्रहणं तदाज्ञामादायापि तस्करता विद्यते । अस्तेयव्रतपालक स्वावश्यकता शनै शनै. न्यूना कुर्वन् गच्छति ।[3]"

---

१. आत्मसंयम, सस्ता साहित्यमण्डल, नई दिल्ली, द्वितीय संस्करण, पृ० ६३ ।
विशेष जानने के लिए—
यह इन्द्रियसंयम आसान नही है । इन्द्रियो से बिलकुल काम ही नही लेना एक बात आसान हो सकती है । मौन, निराहार आदि बातें इतनी कठिन नही हैं । इससे उलटा इन्द्रियो को खुला छोड़ देना तो सबके लिए सधा-सधाया ही रहता है । परन्तु जिस प्रकार कछुवा खतरे की जगह अपने तमाम अवयवों को भीतर छिपा लेता है और निर्भय स्थान पर उनसे काम लेता है, इसी तरह विषय-भोगो से इन्द्रियो को समेट लेना और परमार्थ के काम में उनका उचित उपयोग करना यह संयम कठिन है । इसके लिए महान् प्रयत्न की जरूरत है ।—गीताप्रवचन, विनोबा भावे, पृ० ३२ ।
तथा—तानि सर्वाणि संयम्य युक्त आसीत मत्पर ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥—गीता २।६१ ।
२. गीता २।५९ ।
३. व्रतमहाव्रत, विद्याप्रचारकमण्डल, चाँदनी बाजार, शाहाबाद, पृ० २०-२१ ।

गान्धिनो विचारेण मनसापि कस्यापि वस्तुनो ग्रहणाकाङ्क्षा तस्करतास्ति। एषा पतितकारिण्यस्ति। वयं कस्यापि सुन्दरमाकर्षकं वस्तु वीक्ष्य लोभं कुर्मः, तत्प्राप्तुमिच्छामः। अस्माकमेष स्वभावः तस्करतान्तर्गतो विद्यते। उपवासी शरीरेण न खादति, यदि स द्वितीयं खादन्तं वीक्ष्य मनसा स्वादेच्छां करोति, तदा स चौर्यमाचरति, उपवासं जहाति। य उपवासत्यजन् खादितुं समीहते सोऽस्तेयमुपवासं द्वावपि नाशयति। अस्तेयव्रतपालकः नम्रः विचारशीलः विवेकी तथा साधारण-वसनो भवति। यः स्वजीवनेऽस्तेयव्रतं पालितवान्, स भौतिकीं बौद्धिकीं नैतिकीं कलागताश्च शक्तीः नियामयति। अतः समूहस्य व्यक्तेश्च उभयोरपि कृते सभ्यतायै, सदाचरणशीलतायै चास्तेयव्रतस्य पालनमपेक्षितमस्ति।

अपरिग्रहस्य सम्बन्धोऽस्तेयेनास्ति। यद्वस्तु मूले चौर्यस्य नास्ति, परन्तदेवा-नावश्यकमस्ति, तदा तस्य वस्तुनः सग्रहः व्यक्ति-समाजोभयकृतेऽनावश्यकोऽहित-करश्च विद्यते। परिग्रहस्यार्थः सञ्चयो विद्यते। सत्यशोधकः परिग्रहं न सञ्चयति। परमात्मापि परिग्रहं न सञ्चयति। स आत्मनः आवश्यकं वस्तु प्रतिदिनं जनयति। यदि वयं परमात्मनि विश्वासं कुर्याम तदा ज्ञास्याम यदावश्यकताया वस्तूनि प्रतिदिनं जायन्ते। यः सञ्चयं करोति, स जगति विषमतां तज्जन्यदुःखानाञ्च सर्जनं करोति। अतः सञ्चयः सामाजिकदृष्ट्या, राष्ट्रदृष्ट्या चाहितकरः कथितो विद्यते। मानवतृष्णा प्रत्यहं वर्धते। स क्वापि न तुष्यति। यो लक्षाधीशोऽस्ति, स कोट्य-धीशतायै, यः कोट्यधीशोऽस्ति, स ततोऽप्यधिकाधिपतित्वाय यतते। दरिद्रोऽपि स्वावश्यकतानुसारं वस्तु प्राप्य न तुष्यति, सोऽपि धनाढ्यो भवितुमिच्छति। यो मनसा कर्मणाच दिगम्बरो भवति, स एव सत्यसाधको विद्यते। उक्तञ्च गीतायाम्—

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते॥
क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥[1]

---

१. गीता, २।६२-६४।
तुलनीयम्—
हृदि यस्य पदं धत्ते परवित्तामिषस्पृहा।
करोति किं न किं तस्य कष्टलग्नेव सर्पिणी॥—ज्ञानार्णव, रायचन्द्रशास्त्र माला, ११७

गान्धी लिखितवान्—"सत्यस्य संस्कृते. सुधारस्य सभ्यतायाश्च लक्षणं परिग्रहवृद्धिर्नास्ति, प्रत्युत विचारपूर्वकं तस्य न्यूनता वर्त्तते। यथा-यथा परिग्रहो न्यून. क्रियते, तथा-तथा सुखसन्तोषयोर्वृद्धिर्भवति। सेवा क्षमता च वर्धते। केवलं सत्यात्मदृष्टया विचारेण शरीरमपि परिग्रहे गण्यते। भोगेच्छार्थमस्माभि. शरीरावरणं गृहीतम्। भोगेच्छा यदि परंक्षीणा भवेत्, तदा शरीरेच्छा नश्येत्। यो विचारोऽस्मानीश्वराद् विमुखान् करोति, ईश्वरसविधे वा न नयति, स परिग्रहे गण्यतेऽत एव च स त्याज्योऽस्ति।"

महात्मगान्धिना परिग्रहव्याख्या परमविस्तरेण कृता। स सर्वविधसंग्रहं परिग्रहं मनुते। यावत् संसारस्य पदार्थे. विषये. वा ममता संलग्ना भवति, तावत् परिग्रहस्य मोचनमावश्यकमस्ति। ममता मोहबुद्धिश्च परिग्रहे स्त.। अत साम्यवादाय परिग्रहस्य त्याग आवश्यको वर्त्तते।

सप्तमहाव्रतस्यान्तिमा शृंखला—अभयमस्ति। इदं व्रत गान्धिमहोदय. गीताया. षोडशाध्यायत् प्रेरितो भूत्वा प्रतिपादितवान्। गीताया लिखितम्—

> अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः
>
> दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥—गीता १६/१

विनाभयमाध्यात्मिकसम्पदोऽलभ्या सन्ति। अभयं विना नाहिंसा पालिता भवेत्, न सत्यमेव रक्षित भवेत्। यो भीत कापुरुषश्चास्ति, स सत्याहिंसयो पालन कर्त्तुं न शक्नोति। अभयार्थोऽस्ति समस्तबाह्यभयेभ्यो मुक्ति। मृत्युभयं धनापहरणभयं कुटुम्बपरिवारादिभयं रोगभयं शस्त्रप्रहारभयं सम्मानभयमेव भयान्यसंख्येयानि सन्ति। भयाक्रान्त. संसारे किमपि सत्कार्यं कर्त्तुं न प्रभवति। स. भयात् न सत्यं वक्तु शक्नोति, न चाहिंसाया. पालनं करोति। यो निर्भयो भूत्वा सर्वविधानि प्रलोभनानि विजितवान्, स एव स्वकल्याणे परकल्याणे वा प्रवृत्तो भवितुमर्हति। भयं कातरताया लक्षणमस्ति। भयाक्रान्त एव जन इन्द्रियदासो भवति। स एव च परिग्रहादीना सञ्चय विधायावश्यकताना पूर्ति करोति।

एवंप्रकारेण महात्मगान्धिना कर्त्तव्याकर्त्तव्यौ समीक्ष्य स्वनीतिविज्ञाने कृता। यस्य जनस्याचरणं शुद्धं परिष्कृतञ्चास्ति, स स्वसाधनाया सफलो भवितुं शक्नोति। आत्मसंयमस्येन्द्रियसंयमस्य च प्राप्तिरुक्तसप्तमहाव्रताचरणद्वारेण सम्पत्स्यते। दया, सहानुभूतिः, सहिष्णुता, नम्रताप्रभृतयोऽपि गुणा अपेक्षिता सन्ति। सत्याचरणेन विना जीवनशोधनस्य किमपि कार्यं न सम्भवति।

जीवनदर्शनम्

महात्मगान्धिनो जीवनदर्शनमाचारदृष्टान्तोपरि चावलम्बितमस्ति। स सामा-

गान्धिनो विचारेण मनसापि कस्यापि वस्तुनो ग्रहणाकाङ्क्षा तस्करतास्ति। एषा पतितकारिण्यस्ति। वय कस्यापि सुन्दरमाकर्षक वस्तु वीक्ष्य लोभ कुर्म, तत्प्राप्तुमिच्छाम। अस्माकमेष स्वभाव तस्करतान्तर्गतो विद्यते। उपवासी शरीरेण न खादति, यदि स द्वितीय खादन्त वीक्ष्य मनसा स्वादेच्छा करोति, तदा स चौर्यमाचरति, उपवास जहाति। य उपवासत्यजन् खादितु समोहते सोऽस्तेयमुपवास द्वावपि नाशयति। अस्तेयव्रतपालक नम्र विचारशील विवेकी तथा साधारण-वसनो भवति। य स्वजीवनेऽस्तेयव्रत पालितवान्, स भौतिकी बौद्धिकी नैतिकी कलागताश्च शक्ती नियामयति। अत समूहस्य व्यक्तेश्च उभयोरपि कृते सभ्यतायै, सदाचरणशीलतायै चास्तेयव्रतस्य पालनमपेक्षितमस्ति।

अपरिग्रहस्य सम्बन्धोऽस्तेयेनास्ति। यद्वस्तु मले चौर्यस्य नास्ति, परन्तदेवानावश्यकमस्ति, तदा तस्य वस्तुन सग्रह व्यक्ति समाजोभयकृतेऽनावश्यकोऽहितकरश्च विद्यते। परिग्रहस्यार्थ सञ्चयो विद्यते। सत्यशोधक परिग्रह न सञ्चयति। परमात्मापि परिग्रह न सञ्चयति। स आत्मन आवश्यक वस्तु प्रतिदिन जनयति। यदि वय परमात्मनि विश्वास कुर्याम तदा ज्ञास्याम यदावश्यकताया वस्तूनि प्रतिदिन जायन्ते। य सञ्चय करोति, स जगति विषमता तज्जन्यदु खानाञ्च सर्जन करोति। अत सञ्चय सामाजिकदृष्ट्या, राष्ट्रदृष्ट्या चाहितकर कथितो विद्यते। मानवतृष्णा प्रत्यह वर्धते। स क्वापि न तुष्यति। यो लक्षाधीशोऽस्ति, स कोट्यधीशतायै, य कोट्यधीशोऽस्ति, स ततोऽप्यधिकाधिपतित्वाय यतते। दरिद्रोऽपि स्वावश्यकतानुसार वस्तु प्राप्य न तुष्यति, सोऽपि धनाढ्यो भवितुमिच्छति। यो मनसा कर्मणाच दिगम्बरो भवति, स एव सत्यसाधको विद्यते। उक्तञ्च गीतायाम्—

> ध्यायतो विषयान्पुस सङ्गस्तेषूपजायते।
> सङ्गात्सजायते कामः कामात्क्रोधोऽभिजायते॥
> क्रोधाद्भवति सम्मोह सम्मोहात्स्मृतिविभ्रम।
> स्मृतिभ्रशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥
> रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।
> आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति॥[1]

---

१. गीता, २।६२ ६४।
तुलनीयम्—
हृदि यस्य पद धत्ते परवित्तामिषस्पृहा।
करोति किं न किं तस्य कण्ठलग्नेव सर्पिणी॥—ज्ञानार्णव, रायचन्द्रशास्त्र माला, ११७

विश्वासोऽस्ति यत् शुद्धैः निर्दोषैश्च साधनैरेव पवित्रसाध्यस्य प्राप्तिर्भवति। साधनानि यदि सदोषाणि सन्ति तदा तेभ्यो निर्दोषसाध्यस्य प्राप्तिर्न भविष्यति।

गान्धिजीवनदर्शनस्य प्रमुखलक्ष्यं सरलजीवनमुच्चविचाराश्च सन्ति। यावत्प्रवृत्तयो भोगप्रधाना भवन्ति, तावत् मानवमूल्यानां प्रतिष्ठा न जायते। जीवनधारणार्थम् आवश्यकं, परमस्य सञ्चयस्यावश्यकता नास्ति। अर्थो निजश्रमद्वारेणोत्पादनीय, प्रत्येकमानवः श्रमवान् भवेत्, श्रमेणोपार्जनं कुर्यात्, एतदेव जीवनलक्ष्यमस्ति। गान्धी लोकात्मानं दरिद्रनारायणरूपे पश्यति। यो निर्भयतापूर्वकं श्रमं करोति, स्वावश्यकपदार्थानामुत्पादनं करोति, स एव जीवनानन्दं प्राप्नोति। गान्धिजीवनदर्शनं वैयक्तिकजीवन-लोकजीवनयोर्न कमपि भेदं स्थापयति। प्रत्येकमानवस्य या भावना लोकसेवाया सम्पन्नास्ति, लोकसेवया व्याप्तास्ति, सा भावना जीवनमुर्वरं करोति जीवने च क्रियाशीलतामुत्पादयति।

गान्धिजीवनदर्शनस्य प्रमुखकेन्द्रं मनुष्योऽस्ति। स संसारस्य सर्वान् प्राणिनः सुखिनः द्रष्टुमिच्छति। तस्याचारसंहिता कल्पितादर्शो नास्ति, प्रत्युत यथार्थजीवनमस्ति। मनुष्यस्य शरीरस्य, मनुष्यस्य मस्तिष्कस्य मनुष्यस्य हृदयस्य च विकासः गान्धिजीवनदर्शने समाविष्टोऽस्ति। स भोगसाधनैरुत्पादनसाधनैश्च समानरूपेण विकासं वाञ्छति। जीवनाज्जीवनमरणपर्यन्तं प्रशिक्षणमस्य जीवनदर्शने समायाति। उत्पादकतायां विकासे च व्यक्तिरस्य निर्माणं जायते, मानवसंस्कृतेस्तथा मानवसभ्यतायाश्च सर्जनं भवति, स्वावलम्बनशक्तेः स्फुरणं भवति। जीवनस्य स्वावलम्बनाय शारीरिकश्रमद्वारेणोत्पादनमपेक्षितमस्ति। नैतिकता, धार्मिकता, सहानुभूति, पारस्परिकं प्रेम, अन्यसहायार्थं स्वार्थत्यागः, परोपकारः, अन्येभ्यो दत्त्वा भोजनग्रहणमादिगुणा दैनिकजीवनयापनायावश्यकाः सन्ति।

गान्धिदर्शनस्य सारभूतं तत्त्वमभयमस्ति। निर्भयो जनः स्वलक्ष्यप्राप्तिकरणे समर्थो भवति। अनेन जीवनदर्शनानुसारेण वाण्याः पवित्रतापि परमावश्यकी वर्तते। येन स्ववाणी पावनी विहिता तथा यो हितवचनस्य पालनं करोति, स जनः दैनिककार्येषु यशस्वी भवति। वचनशुद्धया सह मनःशुद्धिरप्यपेक्षितास्ति। यदि मनसि कश्चन गर्हितविचारः प्रविशति तदा वाण्यपि विकृता जायते। यावन्मनो विकाररहितं न भवति तावन्मनुष्यः स्वकार्यकलापेषु सिद्धिं न प्राप्नोति। य आत्मालोचनपूर्वकं देशसमाजयोः कार्ये प्रवृत्तो भवति, स एव समाजे गतिशीलतामुत्पादयति। प्रार्थनासामर्थ्यविषये गान्धीमहोदय आत्मशुद्धेः परमावश्यकं स्वीकृतवान्। सत्याचरणं तथा सज्जनतापूर्णो व्यवहारो वैयक्तिकसम्बन्धानां एव मूलं न अपितु सामाजिकसम्बन्धानां अपि मूले स्तः। अतएव मानवस्य प्रत्येकव्यवहारे एतादृश

जिकराजनैतिकविचाराणां समाधानमध्यात्मजीवनदर्शनद्वारेण कृतवान् । निश्चयतो महात्मगान्धिना वैयक्तिकजीवनाचरणे सामाजिकजीवनाचरणे च स्वजीवनदर्शनमवतारितम् । गान्धिनो जीवनदर्शनमेकत्र जीवनरहस्यानां प्रतीतिं कारयति, अन्यत्र च सृष्टिनियमानां शक्तीनाञ्चावेषणं विदधाति । एतावदेव न हि, प्रत्युतात्मज्ञानं विज्ञानञ्च मिलित्वा तां शक्तिं वैयक्तिकजीवने सामाजिकजीवने चावतारयत ।

गान्धिना जीवनदर्शने नवीना वक्तता निहिता 'तस्य धर्मं न्यायो नास्ति, प्रत्युत करुणा विद्यते । अन्येषां जीवनाय दर्शनमस्ति' "जियो और जीने दो"—'जीव जीवय च' स्थाने गान्धिनाऽन्येभ्यो जीव इत्येष सिद्धान्तः स्थापितः । गान्धिदर्शनं सर्वोदयदर्शनमस्ति । अस्य दृष्ट्या वैयक्तिकशक्तीनां गुणानाञ्च विनियोगः सामाजिकजीवने विधेयः । विषयप्रवृत्तिनिषेधोपवासप्रायश्चित्तादिविधायकत्वेन वैयक्तिकजीवनस्याभ्युत्थानमपेक्षते, लोकद्वयोपकारकत्वात् । गीतायां लिखितमस्ति—

ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ गीता १२।६

करुणाया अहिंसाप्रेम्णो तथाशक्तेः वैयक्तिकगुणानां सामाजिकगुणे परिवर्तनस्य कला गान्धिना सर्वोदयेऽभिहिता । तत्रार्थिकसमताया कल्याण-न्याययोश्च स्थापनया विशेषरूपेण बलं प्रदत्तमस्ति । तेन प्रत्येकतथ्यं विचाराश्च मानवीयमूल्यानां निकषासु परिक्षितास्तथाक्रान्तिमयस्य नवसमाजस्य, नवमानवस्य, नवमूल्यानाञ्च सृष्टिः कृता । सत्तायाः सम्पत्तेश्च विकेन्द्रीकरणमपेक्षितमस्ति । भौतिकसमृद्धिकृते तेनैका नवा व्यवस्था नवस्तन्त्रं दत्तो । वैयक्तिकस्वार्थानां सामाजिकस्वार्थे कल्याणेन च सह सामञ्जस्यस्थापनार्थं पूर्णः प्रयासः कृतो विद्यते । गान्ध्यभिमतजीवनदर्शनस्य स्पष्टीकरणं गीतयापि भवति—

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
—गीता १२।१७-१८

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥—गीता १२।१३

स्पष्टमेतद् यद् गान्धि-जीवनदर्शनानुसारमाध्यात्मिकमूल्यानां मौक्तिकमूल्यापेक्षया प्राथमिकता विद्यते । इमे समाजस्य कल्पनां पारिवारिकसमाजरूपे कुर्वन्ति तथा पारिवारिकगुणेषु प्रेम्णोऽहिंसायै करुणात्यागादिभ्यश्च महत्त्वं ददति । तेषां

विश्वासोऽस्ति यत् शुद्धैः निर्दोषैरेव साधनैरेव पवित्रसाध्यस्य प्राप्तिर्भवति। साधनानि यदि सदोषाणि सन्ति तदा तेभ्यो निर्दोषसाध्यस्य प्राप्तिर्न भविष्यति।

गान्धिजीवनदर्शनस्य प्रमुखलक्ष्य सरलजीवनमुच्चविचाराश्च सन्ति। यावत्प्रवृत्तयो भोगप्रधाना भवन्ति, तावत् मानवमूल्यानां प्रतिष्ठा न जायते। जीवनधारणार्थं आवश्यक, परमस्य सञ्चयस्यानावश्यकता नास्ति। अर्थो निजश्रमद्वारेणोत्पादनीय, प्रत्येकमानव श्रमवान् भवेत्, श्रमेणोपार्जन कुर्यात्, एतदेव जीवनलक्ष्यमस्ति। गान्धी लोकाश्रमान दरिद्रनारायणरूपे पश्यति। यो निर्भयतापूर्वकं श्रम करोति, स्वावश्यकपदार्थानामुत्पादन करोति, स एव जीवनानन्द प्राप्नोति। गान्धिजीवनदर्शन वैयक्तिकजीवन-लोकजीवनयोर्न कमपि भेद स्थापयति। प्रत्येकमानवस्य या भावना लोकसेवाया सलग्नास्ति, लोकसेवया व्याप्तास्ति, सा भावना जीवनमुर्वर करोति जीवने च क्रियाशीलतामुत्पादयति।

गान्धिजीवनदर्शनस्य प्रमुखकेन्द्र मनुष्योऽस्ति। स ससारस्य सर्वान् प्राणिन सुखिन द्रष्टुमिच्छति। तस्याचारसहिता कल्पितादर्शो नास्ति, प्रत्युत यथार्थजीवनमस्ति। मनुष्यस्य शरीरस्य, मनुष्यस्य मस्तिष्कस्य मनुष्यस्य हृदयस्य च विकास गान्धिजीवनदर्शने समाविष्टोऽस्ति। स भोगशक्तेरुत्पादनशक्तेश्च समानरूपेण विकास वाञ्छति। जीवनान्मरणपर्यन्त प्रतिक्षणमस्य जीवनदर्शने समायाति। सदाचरणशक्ते विकासे व्यक्ते व्यक्तित्वस्य निर्माण जायते, मानवसंस्कृतेस्तथा मानवसभ्यताया च सर्जन भवति, स्वावलम्बनशक्ते स्फुरण भवति। जीवनस्य स्वावलम्बनाय शारीरिकश्रमद्वारेणोत्पादनमपेक्षितमस्ति। नैतिकता, धार्मिकता, सहानुभूति, पारस्परिक प्रेम, अन्यसहायार्थं स्वार्थत्याग, परोपकार, अन्येभ्यो दत्त्वा भोजनग्रहणमादिगुणा दैनिकजीवनयापनायावश्यका सन्ति।

गान्धिदर्शनस्य सारभूत तत्त्वमभयमस्ति। निर्भयो जन स्वलक्ष्यप्राप्तिकरणे समर्थो भवति। अनेन जीवनदर्शनानुसारेण वाण्या पवित्रतापि परमावश्यकी वर्तते। येन स्ववाणी पावनी विहिता तथा यो हितवचनस्य पालन करोति, स जन दैनिककार्येषु सफलो भवति। वचनशुद्धया सह मन शुद्धिरप्यपेक्षितास्ति। यदि मनसि कश्चित् कुत्सितविचार प्रविशति तदा वाण्यपि विकृता जायते। यावन्मनो विकाररहित न भवति तावन्मनुष्य स्वकार्यकलापेषु सिद्धि न प्राप्नोति। य आत्मालोचनापूर्वकं देशसमाजयो कार्ये प्रवृत्तो भवति, स एव समाजे नैतिकोत्कर्षमुत्पादयति। प्रार्थनासभामनिर्वेदात्र गान्धीमहोदय आत्मशुद्धय परमावश्यकं स्वीकृतवान्। सदाचरणं तथा सज्जनतापूर्णो व्यवहारो वैयक्तिकगवन्ताया एव मूले न स्तोऽपितु सामाजिकगवन्ताया अपि मूले स्त। अतएव मानवस्य प्रत्येकव्यवहार एतादृश

स्यात्, येन तस्मिन् हिंसा स्वार्थौ समाहितौ न भवेताम् तथा परहितकामना निहिता भवेयु ।

गान्धी जीवनोत्थानायान्धविश्वासनिराकरणमपि समीहते । योऽन्धविश्वासेषु सलग्नोऽस्ति, शारीरिकबौद्धिकश्रमेभ्यो दूरेऽस्ति, स सफलता प्राप्तु न शक्नोति । बौद्धिकश्रमेण सह जीवनस्यावश्यकता पूर्णा विधातु शारीरिकश्रमोऽप्यपेक्षितो विद्यते । शारीरिकावश्यकता शरीरेणैव पूर्णा भवेत्, एतस्याधिकावश्यकता विद्यते ।

जीवनदर्शनारम्भ जनस्यात्मनिरीक्षणाच्च भवति । य स्वदोषान् स्वय जानाति, तस्य दोषा तत स्वयमेव निर्गच्छन्ति । पर योऽहङ्कारवशेन स्वदोषानपि स्वगुणेषु गणयितु समीहते, स स्वयमात्मान छलयति तथैवान्यानपि । विश्वप्रेम्णा समाजसेवया च जीवनार्थमावश्यकतत्त्वेन भाव्यम् । विश्वप्रेम्णोदारतयैव च मानवताया द्वारोद्घाटन सम्भाव्यते । त्याग सेवा च व्यक्तिसमाजयोरुभयोरपि कृते सुखदायिन्यौ स्त । गान्धिमहोदय आध्यात्मिकता कमपि विशेषधर्म मतमुपासना पद्धति वा न मनुते । स आध्यात्मिकतामपि नैतिकताया पर्याय स्वीकरोति । तद्दृष्टया धर्मे नैतिकजीवने च न कोऽपि भेदो विद्यते । केवल सिद्धान्तेषु विश्वासेन मनुष्यो नात्तमो भवितु शक्नोति । तदर्थ सत्कर्मकरण सदाचारपूर्णजीवनयापनञ्चावश्यके स्त । कर्म विना श्रद्धा शून्या वर्तते । सदाचार आत्मनीश्वरे च विश्वास , विकारशमनम्, इन्द्रियदमनम्, सयमश्च जीवनोत्थानाय परमावश्यका सन्ति । कार्ये प्रवृत्तिरुद्योगशीलता च जनेभ्योऽनिवार्ये स्त । सक्षेपेण गान्धिजीवनदर्शने निम्नाङ्किततत्त्वानि समादिष्टानि सन्ति—

१ सत्यव्रतानामाचरणम् । २ आर्थिकसमताया विश्वास । ३ वर्गविहीनस्यान्यभेदविहीनस्य च समाजस्य स्थापना । ४ परसेवाया परोपकारवृत्तेश्च कामना । ५ निर्भयता । ६ सदाचार प्रति निष्ठा । ७ शारीरश्रममहत्त्वम् । ८ पारिवारिकसमाजस्य स्थापना ९ ग्राम्यजीवनस्य विश्वास । १० वैयक्तिकजीवनस्य लोकजीवनस्य च सन्तुलनम् । ११ सर्वोदयसमाजस्य प्रतिष्ठा । १२ स्वार्थत्याग । १३ आत्मनिरीक्षणभावना । १४ भौतिकव्यामोहत्याग । १५ आत्मशुद्धयर्थमुपवास प्रति निष्ठा । १६ साधनसाध्ययोरेकता । १७ वैयक्तिकाना सामाजिकमूल्यानाञ्च पुनर्घटनम् । १८ साम्ययोगस्वामित्वस्य भावना । १९ वैयक्तिकस्वामित्वस्य वैयक्तिकसम्पत्तेश्च त्याग । २० सहयोगव्यवस्था प्रति निष्ठा । २१ दृढसकल्प ।

अर्थदर्शनम्

वर्तमानयुगे महात्मगान्धिना ये विचारा प्रस्तुता ते तदर्थदर्शनान्तर्गता सन्ति । स स्वार्थनीते व्याख्या कुर्वंल्लिखितवान्—"यद्दरिद्रता महत्पापमस्ति । यदि

मानव. जीवनदायिनीरावश्यकता: न तर्पयति तदा ततोऽधिकममानवीयं पापं किं भवितुमर्हति। एतस्या स्थितया जीवननिर्वाहस्य स्तरं वर्द्धयितुं लिप्सा पूर्णतया मानवीया वर्तते। अतो मानवापमानस्य, शोषणस्यात्याचारस्य च जन्मानि जायन्ते। अर्थशास्त्रेणैतस्या. प्रक्रियाया अवरोधो विधेय.। प्रतिस्पर्द्धास्थाने सहयोगस्यापनं भवेत्, येन मानव. सहोपभोगस्य, सहजीवनस्य तथा सहोत्पादनस्य लक्ष्यं प्राप्नुयात्, एतदेवार्थशास्त्रमस्ति। एतदर्थं प्रत्येकजनेन शारीरिकश्रमोऽनिवार्यरूपेण विधेय:। एषा जीवनस्य परमावश्यकता विद्यते। प्रत्येकजनस्य व्यक्तित्वं दीर्घ्येदेतदर्थं चेष्टा भवेत्। सर्वेषा व्यक्तित्वस्य संभावना: विकसिता. भवेयु., तथा सर्वे स्वजीवनदायिनीनानावश्यकतानामुपार्जनं कुर्युं, एवं प्रयत्नो विधेय.। यावदन्यो जन बुभुक्षित. स्थास्यति, तावत् स्वबुभुक्षापि शान्ता न भविष्यति, अतोऽन्यबुभुक्षाशमनाय योऽहिंसकोपायो विद्यते, तदेव गान्ध्यर्थदर्शनमस्ति।"[1]

गान्धिनार्थदर्शनस्य व्याख्यानावसरे लिखितमस्ति यन्नैतिकाचरणं स्वनियन्त्रणञ्च जीवने समाजे च महत्त्वपूर्णं स्त.। प्राकृतिकजीवनस्य प्राकृतिकव्रतस्यैवं प्राकृतिकनियमानामाचरणेन मनुष्य. सफलो भवति तथा निजावश्यकता अहिंसाचरणद्वारेण पूरयति। सत्यामेव कर्मठताया वासनालस्यञ्च स्थानं न प्राप्नुत.।

गान्धिनोऽर्थदर्शनस्य स्तम्भद्वयमस्ति—( १ ) सत्यम् ( २ ) अहिंसा च। यथार्थतो मानवजीवनस्याधारमेव सत्याहिंसे स्त.। जीवनस्य मूलभूतान्नवस्त्रावश्यकताना समाधान स स्वराज्येन रामराज्यद्वारेण वा स्थापितवान्। हस्तनिर्मितवस्त्राय ( खादी ) ग्रामोद्योगाय च विशेषं महत्त्व दत्तमस्ति। गान्धिमतानुसारमुपभोक्तृस्थाने उत्पादकस्य प्रतिष्ठा वर्तते।

---

१ विशेष जानकारी के लिए देखें।
गान्धीजी एक कुशल एवं व्यावहारिक अर्थशास्त्री थे। इसलिए इनकी समाजरचना का चित्र पूर्णतया सत्य है। अन्य अर्थशास्त्रियों की भाँति गान्धीजी 'कम काम ज्यादा दाम' या 'सस्ता खरीदो मँहगा बेचो' या 'निर्जीव माँग और पूर्ति सन्तुलन' आदि के अमानवीय एकांगी रूप को अपनाने वाले नहीं हैं। इन्होंने मानवीय अर्थशास्त्र को श्रेष्ठ परम्परा अपनाया है। मानव जीवन के समग्र विचारा राजनैतिक, सामाजिक, आर्थिक, नैतिक एवं व्यक्तिगत पहलू का पूर्ण ध्यान गांधीजी को है। आर्थिक जीवन एकांगी नहीं है। साथ ही उनके आर्थिक सिद्धान्त हवाई नहीं हैं, बल्कि सब विचार पहले आचार से पुष्ट करके निकले हैं।
—महात्मा गांधीजी का आर्थिक दर्शन, काशी विद्यापीठ, पृ० १०२-१०६

वर्त्तमानार्थशास्त्र यत्र मानवस्य शिष्टता,सभ्यता संस्कृति मानवताञ्च विकृता करोति, तत्र महात्मगान्धिनोऽर्थदर्शनं भौतिकव्यामोहमपनीय मानवताया प्रतिष्ठा करोति। अध्यात्मन भौतिकतायाश्च सघर्षविरोधौ महात्मनो वाण्यपनीतवती। महात्मा गान्धी स्वावश्यकताया पदार्थाना स्वयमुत्पादने बल ददाति। यावन्मनुष्य श्रमेण स्वावश्यकपदार्थानामुत्पादन स्वय न करिष्यति,तावत् तस्यार्थिकसमस्याया समाधान न प्राप्स्यते। शारीरिकश्रम जीवनस्य पवित्रो व्रतोऽस्ति। श्रम पूजा-सदृश पवित्र प्रतिष्ठितश्च मान्य ।

कार्लमार्क्सेन वर्गविहीनस्य, शोषणविहीनस्य राज्यविहीनस्य च समाजस्य कल्पना कृता। मर गान्धी शारीरिकश्रमस्य प्रतिष्ठया त साकार कृतवान। स्वराज्यान्दोलने स्वदेशिवस्त्राणा व्यवहारे तथा मानवाधिकार प्रति विहितकुठाराघात-विरोधे सत्याग्रहो जन्मालभत। गान्धी भारतीयकृषक परमेश्वर मनुते। यतस्त-दृष्ट्या शारीरिकश्रम एव सर्वोपरिवैभवमस्ति। कृषक श्रमस्य प्रतीकमस्ति। स उत्पादकोऽस्ति, अनेनैव प्रकारेण स भगवान्निरुच्यते। यतो भगवत निवास श्रम एवास्ति। अत सर्वे स वन्दनीयो विद्यते। कृषक श्रमिकावुभावपि तद्दृष्ट्या महान्तौ विद्येते।

गान्धिनोऽर्थदर्शन वय सर्वोदयार्थदर्शन वक्तु शक्नुम। सर्वोदये समताया भावोऽस्ति। अतएव साम्यवादो न भूत्वा साम्ययोगो भवति। फलत उत्पादनस्य, वितरणस्य, विनिमयादेश्च सर्वेषा सम्यक् विकासो भवति। एतदर्थदर्शनद्वारेण समाजस्य प्रत्येकजनस्य विकासो जायते। गान्धिनोऽर्थदर्शनस्य दृष्टि निम्नप्रकारेण विचार्यते—

१ एतस्या समाजरचनाया आधारे नीते, धर्मस्य, सत्यस्याहिंसायाश्च प्रमुख स्थानम्। जीवनस्य प्रमुखावश्यकताना पूर्त्यर्थं नैतिकदृष्ट्या श्रमकरणमावश्यकमस्ति। श्रम विना जीवन विफल विद्यते। सफलताया एकमात्रसाधन शारीरिकश्रम मन्यते। श्रम तपश्चरणमपि कथ्यते। श्रमेण विना किमपि कार्यं न सिद्ध्यति। आर्थिक समस्याया समाधान श्रम एव विद्यते। श्रमेणैवाभीष्टसाधन जायते।[1]

---

विशेष जानने के लिए देखें—

१ प्रत्येक मनुष्य श्रमवान् बने, श्रम से ही उत्पादन सम्भव है। श्रम प्रत्येक मनुष्य का प्रतिदिन का व्रत बने। श्रम ही उत्पादन का साधन है। श्रम ही वस्तुओं का मूल्य निर्धारित करता है—महात्मा गान्धीजीका आर्थिक दर्शन। पृ० ७।

२ आर्थिकसमता । ३ स्यासग्रहणस्य सिद्धान्तः (ट्रस्टीशिप) । ४ सामाजिकक्षेत्रेषूच्चावचभेदाभावः । ५ बौद्धिकशक्तेः विकासस्य सर्वेषां कृते समानोऽधिकारः । ६ श्रमानुसारं पदार्थानां मूल्यनिर्धारणम् । ७ स्वशासनं बाह्यशासनाभ्यां मुक्तिः । ८ श्रमनिष्ठसमाजस्य सद्भावः । ९ व्ययसाध्यचिकित्सास्थाने प्राकृतिकचिकित्सायाः प्राधान्यम् । १० लोकहिताय साहित्यस्य, कलायाः विज्ञानस्य च स्थापनं, संवर्द्धनञ्च । ११ सहकारितायाः आवश्यकता । १२ साधनशुद्धिः । १३ सामाजिकलाभार्थं कार्यसञ्चालनम् । १४ सम्पत्तेः सदुपयोगः स्वार्थहेतुकः न करणीयोऽपि तु समाजकल्याणार्थं तस्य विनियोगः विधेयः । कोऽपि जनो यथा स्व प्रत्युत्तरदायी, तथैव समाजं प्रत्यपि । १५ वस्तूनां स्वामित्वं सामाजिकमेव स्यात् ।

गान्धिनोऽर्थदर्शनस्याधारः मानवीयमूल्यमस्ति । अद्य जगति या आर्थिकपद्धतयः सन्ति, तासामाधारः भौतिकमूल्यमस्ति । यानि बाह्यवस्तूनि सन्ति, तान्यस्माकं शारीरिकावश्यकतानां तृप्तिं कुर्वन्ति । अर्थशास्त्रे च तेषां भौतिकपदार्थानां मूल्यानां विवेचनं भवति । परं गान्धिविचारानुसारमर्थशास्त्रस्य लक्ष्यं मानवीयमूल्यानां प्राप्तिरस्ति । *मनुष्याणां कृते एव समस्तभौतिकोपकरणानां साधनानाञ्च* प्रयोगो भवति । अत एतेषामुपकरणानां प्रयोग एवम्प्रकारेण भवेत्, यन्मानवतायाः अधिकाधिको विकासः जायेत । आदर्शमूल्यानां स्थिरौ साध्यस्य प्रधानता भवति, भौतिकमूल्येषु साधनस्य । गान्धिविचारानुसारं मनुष्यस्य नैतिकविकासस्यात्यधिकावश्यकता विद्यते । गान्धी स्वार्थदर्शनपूर्त्यर्थं पञ्चदशसूत्रात्मकं कार्यक्रमं प्रदत्तवान्, यस्मिन् ग्रामाणां विकासोऽपि समाविष्टोऽस्ति । महात्मा गान्धीः औद्योगीकरणस्य विरोध्यासीत् ।

तस्य मतमासीत् यत् भारतसदृशजनसंख्याबहुलदेशकृते महतां यन्त्राणामुपयोगो लाभदायको नास्ति । *औद्योगीकरणं धनसञ्चयं कतिपयजनानां हस्तेषु भवति* । येन समस्तार्थव्यवस्था कतिपयजनैः सञ्चालिता भवति । स्वभावतः समाजे आर्थिकी असमानतायाति । यदा धनस्य सञ्चयं कार्यं कतिपयजनाः करिष्यन्ति, तदा तेषु प्रलोभनं भविष्यति, समाजे चासमानता व्याप्ता भविष्यति । अतः भारतसदृशनिर्धनदेशकृते औद्योगीकरणस्य तद्रूपं स्वीकृतं भविष्यति यत् विदेशेषु स्वीकृतम् । महात्मा गान्ध्यार्थिकसद्घटनामेव निर्मातुं समीहते येनाधिकाधिकजनाः कार्यान्विताः भवेयुः, समाजे चार्थिकसमानता भवेत् । औद्योगीकरणस्य सर्वाधिको महान् दोषः गान्धिनुदृष्ट्याऽयमस्ति यत् शिक्षिताः जनाः ग्रामेभ्यो नगरेषु गच्छन्ति, येन नगराणां वृद्धिर्भवति ग्रामाणाञ्च ह्रासो जायते तथा ग्रामीणार्थिकव्यवस्थायां अस्तव्यस्तता जायते ।[1]

---

1. विशेष ज्ञान के लिए देखें—'औद्योगीकरण पर गांधीजी के विचार'—महात्मा गांधीजी का आर्थिक दर्शन, वाराणसी, पृ० २४०–२५० ।



३

एकस्मिन्नेवस्थानेऽत्यधिकोत्पादनकारणाद् व्यर्थता ( बेकारी ) प्रसरति। निर्जीवशिल्पशालानान्तु वृद्धिर्भवति, परं सजीवमनुष्या आजीविकारहिता भवन्ति। फलतः आजीविकाहीनाना समस्या प्रतिदिनं वर्द्धते तथा समाजेऽव्यवस्था भ्रष्टाचारश्चोत्पद्येते। स्वामिभृत्यभावना समाजे प्रसरति।

महात्मा गान्धी यन्त्रोद्योगं मर्यादितं चिकीर्षन्नासीत्। स महता वस्तूनामुत्पादनमेभिरुद्योगैरावश्यकं मनुते स्म। फलतः तद्दृष्ट्या ग्रामोद्योगस्य स्थानं प्रथममासीत्, यन्त्रोद्योगस्य च द्वितीयम्। गान्धी स्वदेशिवस्तुनः परिभाषां लिखन् कथितवान्—"यद्वस्तु कोटि कोटि-भारतीयानां हितानां संवर्द्धनं कुर्यात्, यद्यपि तस्मिन् विदेशस्य सम्पत् लग्ना भवेत् कौशलञ्च लग्नं भवेत् तद्धितसाधकत्वेन स्वदेश्यस्ति। परं सा सम्पत् तत्कौशलञ्च भारतीयनियन्त्रणे स्याताम्।"[1]

"किमपि वस्तु स्वदेशि तदैव कथ्यते, यदैतत् सिद्धं भवेत्, यत्तद्वस्तु जनसमुदायहितायास्ति, तथा तस्मिन् कार्यकर्त्तारः श्रमिकाश्च भारतीया सन्ति।"[2]

स्पष्टमस्ति यत् गान्धी ग्रामोद्योगाय विशेषमहत्त्वमददात्। सोऽनेनैव जनसामान्यं समृद्धं समानञ्च चिकीर्षन्नासीत्[3]। मानवमूल्यानां स्थापना ग्रामोद्योगैनैव सम्भवास्ति। स्वास्थ्यस्य स्वच्छतायाः सन्तुलितभोजनस्य तथा सामाजिकमानसिकाध्यात्मिकविकासस्य साधनानामुपलब्धिः ग्रामोद्योगद्वारेणैव सम्भवति। मानवजीवनं ग्रामोद्योगद्वारेणैव स्वावलम्बि भवितुमर्हति। सन्तोषस्य स्वावलम्बनस्य, सदाचारस्य तथा सहकारितायाः सम्मुखं तदग्रसरं भवितुं शक्नोति। अपरिग्रह, अहिंसा तथा सत्यमेव नवजीवनस्याधारं सम्पत्स्यन्ते। अतएव महात्मगान्धिदृष्ट्या ग्रामोद्योगस्य महत्त्वपूर्णं स्थानमस्ति।

महात्मनो गान्धिनोऽर्थदर्शनस्य प्रमुखाधारः श्रमोऽस्ति। शरीरस्यास्तित्वाय पोषणाय च यावती खाद्यपदार्थस्यावश्यकता विद्यते तावत्यवश्रमस्यापि। स वैज्ञानिकधार्मिकविचाराणां सम्मिश्रणं विधायार्थव्यवस्थां श्रममूलां सिद्धां कृतवान्। तस्य विश्वासोऽस्ति यत् प्रकृतिः समाजे सर्वान् जनान् समानान् सृष्टवती। एतस्य समत्वस्य निर्वाहः पारस्परिकसम्बन्धानामाधार एव सम्भवोऽस्ति। यावत् भेदभावस्य वर्गसंघर्षस्य चास्तित्वं स्थास्यति, तावत् समत्वस्य स्थापना न भविष्यति। अर्थसदृशेन भौतिकसाधनेनापि सह समतायाः, स्वतन्त्रतायाः भ्रातृत्वस्य च सम्बन्धोऽस्ति। य

१. हरिजन सेवक ३०।१०।३७।

२. वही, नवम्बर, दिसम्बर १९३८, १८३९।

३. Young India 18|10|20, 21|7|20, 16|6|28।

समाज स्वमूल्याना प्रतिष्ठा कुर्वन् स्वमूलभूतवृत्तीना कलात्मक विकास समीहते, स समाज समताया स्वतन्त्रतायाश्चाधार एव तथाकर्त्तुं शक्नोति । गीताया भगवता कृष्णेन कथितम्—

आशापाशशतैर्बद्धा कामक्रोधपरायणा ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ —गीता १६।१२
अहकार बल दर्पं काम क्रोध च सश्रिता ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयका ॥—गीता० १६।१८

प्रत्येकजन समाजे परस्परसहायतया सम्पदो भौतिकवस्तूना वार्जन करोति । मनुष्यस्य कापि सम्पद् परस्पर साहाय्य विना नार्जिता भवितु शक्नोति । मनुष्यस्य प्राथमिकावश्यकता भोजनस्य शरीरसरक्षणस्य च सन्ति । इमा आवश्यकता कस्मिश्चिद्देशे समाजे च पूर्णरूपेण तृप्ता भवन्ति, क्वचिदल्पमात्रायाम् । अस्या स्थितौ समुत्पादितशक्ते कश्चिदभाग यस्मिन् कस्मिन्नपि रूपे समाजस्य कतिपयसमर्थजनाना सविधे सम्पत्तिरूपे धनरूपे वा एकत्र जायते । अस्या सम्पद साधनस्य वा स्वामित्वमस्य जनस्य न हि, प्रत्युत समग्रसमाजस्य जायते । स जनस्तु केवल तद्धन सरक्षण-( ट्रस्टीशिप ) रूपेण स्वसमीपे रक्षति, येन तस्योपयोग समाजस्य कार्याणि कृते विहित स्यात । भूमि, सम्पत्ति, श्रम, बुद्धि, साधनञ्चैतानि सर्वाणि जनविशेषसमीपे सरक्षणार्थं सन्ति । स्वयमुपयोगार्थं न । महात्मगान्धिन सरक्षणस्यैप सिद्धान्त तदीयार्थदर्शनस्यैव यशोऽस्ति ।

प्राचीनार्थशास्त्रे जीवनम्, सम्पत्ति, तथा सुखमतानि त्रीणि मानवस्य मौलिकाधारे प्रतिष्ठितान्यासन् । समाजवादिया विचारधारयैतस्य खण्डन कृतम् । सम्पत्त्य शोषणस्वरूपा स्वीकृता । एवम्प्रकारेण प्राचीनार्थिकविचारधाराया समाजवादिया विचारधारायाश्च मतभिन्नतास्ति । महात्मा गाधी स्वव्रतेषु सयोज्यापरिग्रह परिग्रह स्तेयरूपेण स्वीकृतवान् । परिग्रहस्य द्वे प्रमुखकारणे स्त लोभ रक्षा च । यत समाजे आवश्यकताना तृप्तेराश्वासन नास्ति, सम्पत्तिर्न पूर्णतया लोभपरिणामोऽस्ति न वा पूर्णतया मनुष्यस्य पुरुषार्थस्य भिन्नत्वयिताया परिणामो विद्यते । एतस्य प्रमुखकारण मूलद्रव्यवादी समाजो वर्तते य मानवाय तस्य भविष्यदावश्यकताना तृप्तेराश्वासन न ददाति । एतदर्थमेव जन सग्रह करोति । एतत्सग्रहकारणात् एकत्राभाव आवश्यकता चान्यत्राधिक्य विपुलताश्च जायन्ते । स्पष्टमस्ति यत् सम्पत्ति स्वामित्वञ्च चौर्यमनैतिकता च स्त । महात्मा गाधी अवदत् एकाकिभोजनकर्त्तारं चौरं मनुते । तस्यैतदपि कथनमस्ति यत् सम्पत्तिशाली, स्वामिवान् च जन सर्वदैव दृष्टो न भवति । अतएव सरक्षणसिद्धान्त समाजनिर्माणार्थ-

मावश्यकोऽस्ति। अस्तेयमपरिग्रहश्चार्थिकरचनाया मूलभूतौ स्त। इमौ द्वावपि सिद्धान्तौ गान्धी सरक्षणसिद्धान्ते मेलितवान्। समाजवादिन स्वामित्व सम्पदश्च धनिकेभ्य पुञ्जपतिभ्यश्चादाय श्रमिकवर्गेभ्यो दातुमिच्छन्ति। परमेतादृश्यादान-प्रदानव्यवस्थाप्यनर्थकारिण्यस्ति। एषोऽनर्थोऽपि सरक्षणसिद्धान्तद्वारेणैव दूरीकृतो भविष्यति।

सामाजिकपरिस्थित्या स्वयकृतपुरुषार्थेन च यत्किञ्चन मानवेन प्राप्यते, तस्य न्यासरूपेण सरक्षणीयरूपेण वा स्वीकृति सरक्षणस्य सिद्धान्तोऽस्ति।[1] प्रत्येकजन-समीपे या सम्पत्ति स्वामित्व वा वर्त्तते तदसौ न स्वोपभोगायावगच्छेत्, तथा न केनाप्यार्थिकसाधनद्वारेण तद्वृद्धि कुर्यात्। एष सरक्षणस्य न्यासस्य वा सिद्धान्त सामाजिकपरिवर्त्तनस्य कारणमस्ति।

गान्धी श्रममपि सम्पद मनुते। स श्रमायार्थिकोपकरणाय च समानमादर प्रयच्छति। स सर्वाणि वस्तूनि भगवद्दत्तानि मनुते। अतएव कस्यापि दुरुपयोग पापमूलकोऽस्ति। अथर्ववेदेऽपि लिखितमस्ति—

श्रमेण तपसा सृष्टा ब्रह्मणा वित्तर्ते श्रिता।
सत्येनावृता श्रिया प्रावृता यशसा परीवृता
स्वधया परिहिता श्रद्धया पर्यूढा दीक्षया गुप्ता यज्ञे प्रतिष्ठिता लोको निधनम्॥
—अथर्व० का० १२, सू० ५ म० १–३

गान्धिदर्शनानुसार प्रत्येकमनुष्य स्वतन्त्रप्रेरणया स्वस्य शक्ते रुचे वानुसार-मुनतरूपेण कार्यं करिष्यति तथाधिकाधिक समाजाय दास्यति तथा न्यूनातिन्यून ततो ग्रहीष्यति। इमा प्रत्यर्पणभावना यदा मानवो मनसि समानयति, तदा स स्वकीयां कला प्रतिभा श्रमञ्च समर्पयति। फलत जनदृष्ट्या सार्वभौमदृष्टे विकासो भवति स्व-पर-भावनाया लोपो जायते।

सरक्षणसिद्धान्त (ट्रष्टीशिप) वैयक्तिकसम्पत्ते स्वामित्व न स्वीकरोति। केवल तत्सीमापर्यन्त स्वामित्वाधिकार स्वीकृतो भविष्यति, यत्सीमापर्यन्त समाज सर्वकल्याण पश्यन् स्वामित्वस्वीकृति दास्यति। यस्य प्रकारस्य स्वामित्वेन सम्पूर्ण-

---

१ प्रत्येक सम्पत्तिवाला यह समझे कि सब सम्पत्ति उसीकी नही है, बल्कि सारे राष्ट्र की है। राज्य, जिसका जन्म ही हिंसासे हुआ है, लोगो की सम्पत्ति लेनेमें हिंसाका प्रयोग अवश्य करेगा। लोग स्वेच्छा से ट्रष्टियों की तरह जब व्यवहार करने लगते हैं, तो राज्य या हिंसा की कोई आवश्यकता नही है।
—यगइण्डिया ३०।४।३१, १०।९।३१

समाज लाभान्वितो भवति, तत्प्रकारमेव स्वामित्व सीमितरूपे मर्यादितरूपे च स्वीकृतं भवितु शक्नोति । एतावदेव नहि, प्रत्येकजन स्वनिर्वाहयोग्याना स्वावश्यकताना पूर्ति सहजरूपेण करिष्यति । सक्षेपेणैतत् सिद्धान्तस्य मूलतत्त्व सार्वजनीनोपभोग. कल्याणञ्चास्ति । शोषणसञ्चययोरभावे जाते व्यक्तिसमाजौ समत्वस्य, साम्यस्य सार्वजनीनकल्याणस्य सिद्धान्त प्राप्नुयात् ।

## समाजदर्शनम्

गान्धिन समाजदर्शनमीशोपनिषद साम्यवादस्याधारे प्रतिष्ठितमस्ति । अस्य महात्मन समाजदर्शने द्वैत नास्ति, एकत्वमात्र विद्यते । अहिंसया धनिकेषु सरक्षणभावना प्रतिष्ठाप्य सर्वेभ्य समानरूपेणार्थिकविकासस्य द्वारोद्घाटन गान्धिन समाज दर्शनस्यैका प्रमुखमान्यतास्ति । विशेषरूपेण मानवजाते सामाजिकसघटनाभिमुख मानवध्यानं केन्द्रित विधाय तेन सह सामाजिकपक्षाना महत्त्वस्य व्याख्यान समाजदर्शनमस्ति । गान्धिनास्मिन् विशेषरूपेण जीवनस्य मूल्यानाम्, उद्देश्यानामादर्शानाञ्चाध्ययन कृतम् । स प्रत्येकजनस्य आर्थिक्या, सामाजिक्या, राजनैतिक्याश्च समस्याया समाधान स्वकीये समाजदर्शने समुपस्थापयति । सर्वे मनुष्या समाना समानरूपेणोत्पन्ना सन्ति । अतस्तेभ्य विकासाय समानावसरो लभ्यो भवेत् । अहिंसात्मकसमानताया मूलमन्त्रोऽस्ति—आर्थिकस्वतन्त्रता । सत्यामार्थिकविषमताया स्वस्थसमाजस्य स्थापना न भवितुमर्हति । अल्पतमा जना धनाढ्या भवेयु समूहश्च च बुभुक्षया मृतो भवेत्, एतादृश समाज कल्याणकारी भवितु न शक्नोति । गान्धिन समाजदर्शनस्य प्रथम मन्त्रोऽस्ति—सरलजीवनमुच्चविचारश्च ।[1] एतस्य व्याख्या कुर्वन्नुक्तवान्—"अहमेतादृशभारताय चेष्टा करिष्यामि, यस्मिन् निर्धना, हीनतमाश्चापि ज्ञास्यन्ति यदय तेपा देशोऽस्ति, यस्य निर्माणे तेपा वाण्या महत्त्वमस्ति । अहमेतादृशाय भारताय यतिष्ये, यस्मिनुच्चनीचयोर्वर्गभेदो न स्यास्यति तथा यस्मिन् विविधसम्प्रदायेषु परस्पर प्रेमभावना निहिता भविष्यति । एतादृशे भारतेऽस्पृश्यताया मद्यस्य तथान्यमादकपदार्थानामभिशापाय किमपि स्थान न भविष्यति । न वय कस्यापि शोषण करिष्याम न वा केनापि कृत स्वशोषण वक्ष्याम ।[2]

महात्मागान्धी "सबै भूमि गोपालकी" वाक्ये विश्वसिति । समस्ता भूमि जनताया अस्ति । पुञ्जपतिभ्य हिंसकरीत्या पुञ्जस्यापहरणमविधायाहिंसकरूपेण

---

१ youg India 30।5।3।

२ वही, १०।९।३। तथा हरिजन, दिसम्बर १९४०,

तस्योपयोगो विधातव्य प्रतिस्पर्द्धाया स्थान गान्धिन समाजदर्शने नास्ति । गान्धि-समाजदर्शनस्य सम्यक् ज्ञानाय तस्य निम्नाकिततत्त्वाना ज्ञानमावश्यकमस्ति ।

१ समानताया स्थापना न केवलमार्थिकक्षेत्रेऽपितु जीवनस्य प्रत्येकक्षेत्रे विधातव्या । ससारस्य सर्वे प्राणिन समानशक्तिमन्तस्सन्ति । सर्वेभ्य स्वतिरोहित-शक्तिविकासाय समानाधिकार प्राप्तो विद्यते । कस्यापि वर्गस्य समाजस्य सम्प्रदायस्य वा सर्वेभ्य मानवेभ्य समानरूपेण स्वावश्यकतातृप्त्यै अधिकार उपलब्धोऽस्ति । फलत वर्णभेदस्य जातिभेदस्य वा क्वापि स्थान नास्ति । गान्धीलिखितवान्— "वर्णेषूच्चावचता सन्त्येव नहि । स तु पतित एतदर्थं कथ्यते यत् स स्वपतितताम् विहाय परावृत्य ब्राह्मणो भवितु शक्नोति । उच्चावचवार्तां परित्यज्यैतदेव मन्यताम् यत् बर्द्धकि वर्द्धकित्व विहाय यदि मलस्वच्छताया कार्यं कुर्यात् तदा किं गीता तम्प्रति व्यक्ति यत् स धर्मच्युतो जात —"स्वधर्मे निधन श्रेय " तक्षक स्वर्णकारस्य कार्यं यदि न कुर्यात्, वेदाध्ययनमेव करोतु, तदाऽहं त पतितमेवतक्षक वक्ष्यामि । धर्मकर्मणो समन्वय कर्तव्यो विद्यते । जनान् साहसिन कर्तुं व्यवस्येत् वदेच्चयत सर्वेव्यापार कुर्युस्तदा किं चलिष्यति ? अतएवानुवशिकानिकर्माणि सन्ति । वय तु वक्ष्यामो यत् स्वबुद्धे समाजस्य नित्यकल्याणायोपयोग कुर्यात् । अद्य कञ्चनजङ्घो-पर्यारोहकाणा प्रशसा भवति । मम हृदय तेषा प्रशसा न करोति, प्रत्युत निन्दा विदधाति । अस्माक देशे समाजप्रतिष्ठापनार्थं मानवीयमूल्यानामन्वेषण परमावश्य-कमस्ति । पतञ्जलिरहिंसाया शास्त्रीयमन्वेषणमकरोत् ।[1] गीताया वाङ्मयतपस लक्षण प्रतिपादितमनेन लक्षणेन समाजस्थापनार्थवचनशुद्धिरपिपरमावश्यको, इत्यनु-मीयते । यथा—

अनुद्वेगकर वाक्य सत्य प्रियहित च यत् ।
स्वाध्यायाभ्यासन चैव वाङ्मय तप उच्यते ॥—गीता० १७।१५

यदीदृश्यते लोके, मनुष्या परमकल्याणमजानन्तो ] विषयभोगेच्छया परस्पर वैरमुत्पाद्याल्पसुखस्य हेतो पर्वतप्रायदु खमनुभूय दुखस्य कारण जिज्ञासन्ते, परन्तु सम्यक्तया न जानन्ति ।[2] परस्वनेककल्पना कुर्वन्त सुखदु खकारणविषये विव-दन्ते । केचन स्वमेव स्वकीयदु खस्य कारणतया वर्णयन्ति, परे दैवम्, अन्ये कर्म,

---

१ महादेव भाई को डायरी, तृतीय भाग, नवजीवन प्रकाशन मन्दिर, अहमदावाद, पृ० ६१

२ लोक स्वय श्रेयसि नष्टदृष्टिर्योऽर्थात् समीहेत निकामकाम ।
अन्योन्यवैर सुखलेशहेतोरनन्तदु ख न च वेद मूढ ॥—भागवत ५।५।१६

केचित् स्वभावम्, एके परमेश्वरं च निरूपयन्ति ।[1] वस्तुतो विचारदृष्ट्याऽहङ्कार एव दुःखकारणमस्ति, स्वस्वरूपज्ञानं सुखस्य कारणञ्चास्ति ।[2] गान्धिना स्वस्वरूपज्ञानेनात्मालोचनं स्वीकृतम् । योऽहिंसात्मकदृष्टिबलेनाभ्यासमालोडनं करोति, स स्वदोषं स्वयमेव पश्यति । स्वदोषाणामवलोकनमेव सामाजिकदृष्ट्याहिंसाऽस्ति । अत इन्द्रियविजयपूर्वकं स्वकार्ये प्रवृत्तिर्विधेया । इन्द्रियविजयं विना निःस्वार्थवृत्तेरुत्पत्तिः नस्यात् । निःस्वार्थवृत्यभावे वर्गहीनसमाजस्य कल्पनापि न सम्भवति ।

स्पष्टमस्ति यत् गान्धी प्राचीनवर्णव्यवस्था न मनुते स्म तद्दृष्ट्यायसर्वे कर्मचाण्डाला सन्ति। सर्वा जातयः समाना तुल्यधर्मादिका तुल्यगुणाश्च सन्ति। गान्धी स्वयमात्मानं कर्मानुसारं शूद्रं वैश्यं क्षत्रियं ब्राह्मणं वा कथयति स्म। मनुष्यः यथा कर्म करोति तथा तस्य वर्णं मन्यते । जन्मतो मरणपर्यन्तमेकएव वर्णस्तिष्ठतीति मान्यता गान्धिदृष्ट्या समीचीना नास्ति । स हरिजनानुच्चैरुत्थापितवान्, तेषां शिक्षादीक्षयोः प्रबन्धं विहितवान् तथा तेभ्यः स्वसमानसामाजिकाधिकारप्रदानस्य वार्तां कृतवान् ।

( २ ) गान्धिनः समाजदर्शनस्यैकोऽन्य पक्षः सांस्कृतिकमूल्यानामाध्यात्मिकमूल्यानाञ्चास्ति । सम्पूर्णं भौतिकं नैतिकं बौद्धिकं कलाजगतञ्च मूल्यमार्थिकशक्तिभिः नियन्त्रितं भवति। एवम्प्रकारेण तस्य समाजदर्शनं केवलमार्थिकसिद्धान्तोपर्येवावलम्बितं नास्ति, प्रत्युत सम्पूर्णजीवनेन सम्बद्धा विचारा कार्याणि च तत्र समाविष्टानि सन्ति । वस्तुतः समाजस्य समस्या न शुद्धार्थिका सन्ति, नार्थप्रधाना न चार्थिकोपपत्तिमूला एव । ता केवलं जीवनस्याधारभूता सन्ति । एतस्याधारस्य प्रभावः जीवनस्य विविधविधास्ववश्यमेवापतति । परन्तु केवलमेकोऽएव सर्वस्वं नास्ति, सर्वाङ्गीणता विकासायापेक्षिता वर्तते। अतः आर्थिकक्षेत्रेण सह जीवनस्यान्यक्षेत्रेष्वपि मूल्यानां परिवर्तनमावश्यकमस्ति । जीवनस्य प्रत्येककार्यं विवेकसम्मतं भवेत् । समस्यानां समाधानं केवलरोटिकाभिः सम्भवं नास्ति । यतः रोटिकोत्पादकानां साधनानां शुद्धिरावश्यकी विद्यते। साधनानि चेच्छुद्धानि सन्ति, तदा ग्रासरोटिकाअपि शुद्धा भविष्यन्ति । अतः साधनसाध्ययोरेकरूपता गान्धिनः समाजदर्शनस्यैका महत्युपलब्धिरस्ति।

वर्तमानसमाजवादः यत्र केवलं साध्ये दृष्टिं रक्षति, तत्र गान्धिदर्शने साधनाना-

---

१. केचिद्विकल्पवसना आहुरात्मानमात्मनः ।
दैवमन्ये परे कर्म स्वभावमपरे प्रभुम् ॥—भागवत ११।१७।१९

२ भागवत ३।२६।६-७

मपि परीक्षणं मनुते । निस्सन्देहं साधनानां महत्त्वं कार्यसिद्धावधिकमस्ति । यदि साधनानि शुद्धानि स्युस्तदा दीन हीन शोषितजनानां समाजे दर्शनमेव न भवेत् ।[1] एवं महात्मा गान्धी समाजस्य पुनर्घटनाय तथा आर्थिकसामाजिकभीषणविषमतानां निराकरणाय साधनशुद्धौ विशेष ध्यानं ददाति । समाजस्य सर्वे सदस्याः समानाः सन्ति, सर्वे चैकस्यैव परमात्मनोऽशाः सन्ति । अतः प्रत्येकजनस्य सामूहिकरूपेणोत्थानमपेक्षितमस्ति ।

समूहं विना व्यक्तिर्न वर्तेत्, व्यक्तिं विना च समूहोऽपि न कश्चिदस्ति । यदि समूहोऽहिंसको विद्यते, तदा तस्य प्रतिकूलप्रभावः सामाजिकजीवनेऽवश्यमेव पतति । अनैतिकव्यक्तिद्वारेण नैतिकसमाजस्य स्थापना नैव भवितुं शक्नोति । अतो गान्धिनः समाजदर्शनं व्यक्तिशुद्धेः दर्शनमस्ति । अस्पृश्यतानिवारणस्य श्रमस्य च तेनावश्यकता प्रतिपादिता । कुटुम्बस्य तत्प्रचलद्व्यवहाराणाञ्चादर्शः प्रतिपादितो विद्यते । अतएव गान्धिनः समाजदर्शनं न कार्लमार्क्सस्य समाजदर्शनसदृशं साम्यवादमस्ति, न वा प्राचीनविचारधारानुसारं भोगवादमस्ति ।

गान्धिनार्थिकक्षेत्रे संरक्षकतायाः सिद्धान्तः प्रतिपाद्यार्थिकक्रान्तिस्तु कृतैव, परं धार्मिकसामाजिकस्वतन्त्रतायाः प्रतिपादनं विधाय तेन नवमूल्यानामपि स्थापना कृता । गान्धी वर्गविहीनसमाजस्य स्थापनां वाञ्छति स्म, यस्यां शोषण-शोषितयोः पीडक-पीडितयोर्भेदो न स्यात् । सहयोगाधारे सघटितसमाजे सर्वे जन्नतेः समानमवसरं प्राप्नुवन्तु तथा सर्वे पवित्रजीवनं यापयन्तु । श्रमद्वारेण स जनसंख्यावृद्धयवरोधं समीहतस्म, येनोपभोगसाधनानां न्यूनता न भवेत् । प्रेम्णा, करुणया, मानवतया सद्भावनादिभिः शाश्वतगुणैः व्यक्तिसमाजयोः सम्बन्धं संस्थाप्य जीवनं नवीनरूपे परिणतं द्रष्टुं वाञ्छतिस्म । तस्याभिमतमासीत् यत् श्रमजीवि बुद्धिजीविनोरुभयोः समतापेक्ष्यते । शारीरिकश्रमं विना केवलं बौद्धिकश्रमं सर्वोदयस्य कारणं भवितुं नार्हति । महात्मा गान्धी प्रमुखरूपेण शारीरिकश्रमस्य महत्त्वं प्रतिपाद्य समाजे उत्पादकस्य प्रतिष्ठां स्थापितां चिकीर्षतिस्म । निस्सन्देहं बौद्धिकश्रमः आवश्यकोऽस्ति, परमसावनिवार्यरूपेण प्रमुखस्थानं ग्रहीतुन्नशक्नोति । यो

१. गान्धीजी के मतानुसार—प्रत्येक मनुष्य अपनी श्रम-शक्ति, बुद्धि शक्ति, साधन शक्ति, सम्पत्ति शक्ति का प्रयोग पूर्ण निष्ठा एवं योग्यता से करेगा। अपनी आवश्यकतानुसार उपभोग करने के पश्चात् शेष समाज के लिए छोड़ देगा। अधिकतर पुरस्कार मुद्रा में न होकर वस्तु में होगा।

—महात्मा गान्धीजी का आर्थिकदर्शन, पृ० ११४

बौद्धिकश्रमद्वारेण शारीरिकश्रमस्य शोषणं चिकीर्षति, तस्य स विरोधं करोति। तस्य दृष्ट्या शारीरिकश्रमः सर्वोपरि वर्तते।

गान्धिनः समाजदर्शनमहिंसोपर्याधृतमस्ति। तदनुसारं रोगो दरिद्रता च वास्तविकसमाजे न स्यातुं शक्नुतः। यदा समाजस्य प्रत्येकजनोऽहिंसकः श्रमिकश्चाभविष्यत्, तदा सर्वाः विषमताः स्वयमेव समाप्ता अभविष्यन्। न वर्गयुद्धं भविष्यति न वान्या काचन प्रतिक्रियैव।

सत्यमेतदस्ति यत् शाश्वतमूल्याधारे गान्धिनैकस्य शान्तिमयस्य मानवसमाजस्य परिकल्पना कृता। *समाजस्य विपन्नान् दीनान् जनान् समाजस्य समृद्धिशीलः जनः स्नेहेनालिङ्गेत्। एषा तस्य संरक्षकतायाः व्याख्या वर्तते।* प्रत्येकजनः स्वावलम्बी भूत्वा परस्परावलम्बिनः कौटुम्बिकसमाजस्य सदस्यो भवेत्। जीवनदायीनि वस्तूनि अन्नवस्त्रादीन्यापणे क्रीतानि विक्रीतानि वा न स्युः। मानवश्रमो मनुष्यस्यार्थिकावश्यकता न भूत्वा सांस्कृतिकावश्यकता भवेत्। तस्य समाजः भौतिक-नैतिक-सांस्कृतिकसुखानामागारमस्ति। स्वस्थमनुष्यस्य स्वस्थसमाजस्य च लक्ष्यं तदैव पूर्णं भविष्यति, यदा स्वस्थसाधनानां प्रयोगो भविष्यति। त्यागस्य, संयमस्य, सहानुभूतेः, परोपकारितायाश्च वैयक्तिकगुणानां समाजीकरणं गान्धिनः समाजदर्शनस्य सर्वप्रमुखमङ्गमस्ति। अपरिग्रहः सरलता, शारीरिकश्रमश्चैतादृशा गुणाः सन्ति, ये समाजस्य शोषणं व्यक्तिद्वारेण व्यक्तेः वा शोषणं रुन्धन्ति। समर्पणं त्यागः निर्धनान्प्रति तादात्म्यस्य वा भावना प्रत्येकजने जागेरन्।

*गान्धिनोऽभिमतमस्ति यत् प्रत्येकजनः समाजस्यान्तिमजनेन सह स्वजीवनयापनस्याभ्यासं कुर्यात्।* एतेन तस्य भोगाकाङ्क्षा स्वयमेव समाप्ता भविष्यन्ति।

१. बेकारी, शोषण, दरिद्रता, वितरण की विषमता, प्रतिस्पर्धा, साम्राज्य-लिप्सा इत्यादि का अन्त गान्धीजी बड़े सरल तरीके से करा देते हैं। सामाजिक रोगों को समूल नष्ट करने में वे पूर्ण सफल होते हैं। आजतक कोई ऐसा अद्भुत व्यक्ति विश्व में उत्पन्न नहीं हुआ, जो गान्धी जी की भाँति समग्र मानवजीवन के प्रत्येक पक्ष का पण्डित हो। भारतीय सार्वजनिक जीवन में उनका प्रवेश देश की दरिद्रता को देखकर ही हुआ। मध्यकालीन भूमि-व्यवस्था, रुढ़िग्रस्त सामाजिक पद्धति, भारतीय जनता की दरिद्रता, ह्रासोन्मुख उद्योग आदि आर्थिक समस्याओं को लेकर गान्धीजी ने अपना कार्यक्रम निश्चित किया। अर्थशास्त्र के उपभोग, उत्पादन, विनिमय, वितरण तथा राजस्व के सभी पहलुओं पर इन्होंने प्रकाश डाला।—महात्मा गान्धी जी का आर्थिक दर्शन, पृ० १०७

इन्द्रियनिग्रहो भोगाकाङ्क्षाशमनार्थमत्यन्तमावश्यकोऽस्ति । यावत् समाजस्यैकोऽपि-जनोऽन्यस्य शारीरिकश्रमस्योपरि—अवलम्बितो भविष्यति, अन्यस्य शारीरिकश्रमेण स्वजीवनयापनं करिष्यति तावदालस्यस्य शोषणस्य चावरोधो न भवितुं शक्नोति । विनोत्पादनमुपयोगः, अधिकोपभोगः, अन्यान् बुभुक्षितान् त्यक्त्वोपभोग , अन्याश्रितत्वञ्चैतत्सर्वमार्थिकहिंसा विद्यते ।

ग्रामीणजीवनस्य श्रेष्ठतोत्पादकस्य श्रेष्ठतास्ति । कृषका. श्रमिकाश्चोत्पादका सन्ति । अतस्तेभ्य. पूर्णा प्रतिष्ठा देया । आधिकारिकशक्तिरपि तेभ्यो देया । सर्वविधा समता—राजनैतिको, आर्थिकी, सास्कृतिको वा सर्वेभ्यः प्राप्या भवेत् । एवं महात्मा गान्धी वर्गविहीना राज्यहीना शोषणहीना मानवतायाः. सर्वोत्कृष्टशासिका सामूहिकसमाजव्यवस्था ग्राह्यामकथयत् । अनयैव व्यवस्थया व्यक्ते. समाजस्य च सर्वाङ्गीणो विकासो निर्धारितोऽस्ति । तस्य समाजदर्शने उपनिषदा चिन्तनं, रामायणस्य समाजशास्त्रीयसिद्धान्ता., बौद्धस्य जैनदर्शनस्य चाध्यात्मवादिनोऽहिंसकसिद्धान्ता पाश्चात्यसिद्धान्ताना नवोनविचाराश्च सम्मिलिता. सन्ति।

गान्धिदृष्ट्या संक्षेपेण समाजदर्शनस्य निम्नाङ्किता. तथ्याः आदर्शाः वर्तन्ते—

१. भय-द्वेष-हिंसा-स्तेय-परिग्रहादीनामभाव , एतेषा स्पष्टीकरणं वा । २. करुणयाधृतमहिंसादर्शनमालम्बनीयम् । ३. आत्मशक्तेः पूर्णविश्वास. । ४ समाजोत्थानाय सत्तव्रतानामाचरणम् । ५. स्वदेशं प्रति दृढास्था । ६. जीवनस्य प्रत्येकक्षेत्रेऽहिंसाचरणं परमावश्यकम् । ७. जातिभेद-वर्गभेद-रंगभेदाना सर्वथा त्याग. । ८. प्रेम-त्यागानन्दैक्यादीना जीवने प्रयोग । ९. सर्वोदयविचारधारा प्रति निष्ठा । १०. आर्थिक समता । ११. संरक्षणसिद्धान्तस्योपयोग. (ट्रस्टीकरण का व्यवहार) १२ सहकारितायां विश्वासः । १४. नैतिकचेतना । १५. ग्रामोद्योगाना महत्त्वम् । १६. सर्वेषा शक्तिविकासस्य पूर्णावसर । १७. सम्पत्यर्जनार्थमुपलब्धसाधनाना यथार्थ' उपभोगः । १८. भोग्यवस्तूनामुपयोगिवस्तूना च वैयक्तिकस्वमित्वस्याभाव. । १९ संयमपूर्णजीवनम् । २०. प्राथमिकावश्यकताना तृप्त्यनन्तरं यद्द्रव्यमवशिष्टं तस्य विनियोग. समाजकल्याणार्थं करणोय. । २१. शोषणविहीनसमाजस्य स्थापना । २२. श्रम-समता-सयमाधारे समाजविकासस्य कल्पना । २३. अहिंसकार्थव्यवस्था । २४. जनतान्त्रिकप्रणाल्या विश्वास. । २५. निर्धनाना, भूमिहीनाना कृषकाणा सेवकानाञ्चाभ्युत्थानार्थं यतनीयम् । २६. महयोगपद्धत्या ग्रामीणविकासो विधेय. । २७. प्राकृतिकचिकित्सायाः प्रयोग. । २८. मद्यमासादीना त्यागः । २९. स्वकार्यं स्वेनैव हस्तेन करणोयम् । ३०. विकेन्द्रितोत्पादनम् । ३१. व्यक्तिश्रेय. समष्टिगतश्रेयसि निहितमस्ति । ३२. सर्वकार्याणा समानमहत्त्वमस्ति,

किमपि कार्यं श्रेष्ठं न च निम्नम्। ३३. श्रमिकस्य जीवनं यथार्थम्, सर्वोत्कृष्टञ्चास्ति। ३४. प्रत्येकजनाय सेवकगुणा अपेक्षिताः। ३५. सत्य-अहिंसा-ब्रह्मचर्य-अस्वाद-अस्तेय-अपरिग्रह-अभय-अस्पृश्यतानिवारण-शरीर-श्रम-सर्व-धर्मसमभाव-स्वदेशि-भावना, इत्येकादशव्रतानामाचरणम्।

## उपसंहारः

महात्मा गान्धी युगद्रष्टा, क्रान्तिकारी शिक्षक, कल्याणकारी समाजप्रतिष्ठापकः तथा पुरातनजीवनमूल्यानां पुनर्मूल्याङ्कक समाजशास्त्र्यासीत्। मानवजीवनस्य विश्वसम्बद्धानां समस्यानाञ्च समाधानमेवस्यचिन्तकस्य दार्शनिकस्य च रूपेणोपस्थापितवान्। यद्यपि दर्शनशास्त्रस्य प्राचीनमान्यतानामाधारे गान्धि-साहित्येऽत्यल्पाः सिद्धान्ताः उपलब्धाः सन्ति। परं नवीनदृष्ट्या नवचिन्तनस्यानेकतत्त्वानि तस्मिन् समाविष्टानि सन्ति। सत्याहिंसयो, अस्तेयस्य, ब्रह्मचर्यापरिग्रहयोश्च ग्रहणं तेन श्रमणसंस्कृते कृतम्। श्रमणसंस्कृते. प्रधानतत्त्वं श्रमञ्च स सर्वाधिकं महत्त्वपूर्णं स्वीकृतवान्। निश्चयतो महात्मा गान्धी एकस्तत्त्वचिन्तक एतादृशो दार्शनिकोऽस्ति य न्यस्यस्य सबलस्य च मङ्गलपुरुषस्य कल्पनया पारिवारिकगुणाधारे नवस्यैकस्य, समाजस्य निर्माणं चिकीर्षति स्म। तस्यैष समाजः न देशविशेषस्य कृते हितकारी अभविष्यन् प्रत्युत विश्वस्य कृते।

## अन्तिमनिवेदनम्

गान्धि-शताब्दिसमारोहावसरे 'मगध'स्य गान्धिदर्शन-विशेषाङ्कप्रकाशनप्रेरणा भारतीयसंस्कृतिसाहित्ययोरनुरागिणो, विदुषो मगधविश्वविद्यालयस्य माननीयोपकुलपते श्रीविश्वमोहनकुमारसिंहामहोदयात्तथारास्थस्य एच. डी. जैनकालेजस्य प्राचार्यात् डा० श्रीपरमहंसरायात् प्राप्तावोहमुक्तोभयोरपि वरिष्ठविदुषोराभार्यस्मि। युगपुरुष श्रमणतपस्वी महात्मा गान्धी देशायास्मै केवलं स्वतन्त्रतामेव दत्तवान् परमेतस्य नवग्रामस्य कल्पनामप्यवच्छत्। तदीयादर्शाधारे निर्मितसमाजः विश्वस्य समस्तधितकै कल्पितस्य समाजस्यापेक्षयापि श्रेष्ठ आनन्दमयश्च भविष्यति। आर्थिकविषमता धनवितरणद्वारेण दूरीकृता न भविष्यति। एतदर्थमहिंसाचरणं शान्त्यं च प्रति निष्ठावश्यको वर्तते। अस्मिन्नवसरेऽहं तं श्रमणतपस्विनं प्रति श्रद्धाञ्जलिञ्च समर्पयामि। धन्योऽयं महानुभाव, येनाहिंसक सर्वोदयसमाजस्यापि स्थापिता।

भवदीयः,

संस्कृत-प्राकृत विभागः
आरा (बिहार) एच० डी० जैन कालेजः
मगध विश्वविद्यालय

नेमिचन्द्र शास्त्री

# गांधी-विचारधारायामाधृतमर्थशास्त्रम्

डॉ० परमहंसराय, एम० ए०, पी-एच० डी० ( लन्दन )

सर्वप्रथम महात्मा गांधी एक आध्यात्मिकोऽन्वेषक आसीत्। तस्यैक एवासंग आसीत्तथा स आसंग एव आसीत्, यत् भगवतो दर्शनं कथं भवेत्। भगवत्साक्षात्कार केन प्रकारेण स्यात्। स स्वयं लिखितवान्—'यदहं प्राप्तुमिच्छामि, एतेभ्यस्त्रिंशद्वर्षेभ्यो यं प्रयत्नमहं कुर्वन्नागच्छामि तथा यदर्थमहं लालायितोऽस्मि, सोऽस्त्यात्मसाक्षात्कार, ईश्वरस्य परस्परस्य पुरतो दर्शनम्, मोक्षप्राप्ति।[1]

अर्थशास्त्रस्य भाषाया महात्मनो गान्धिन प्रमुखावश्यकतासीदीश्वरस्य परस्परस्य पुरतो विलोकनम्। ईश्वरमसौ सत्यरूपेऽन्वेष्टुं प्रारब्धवान् तथा कथितवान् यदीश्वरः सत्यमस्ति। स्वाध्यात्मिकान्वेषणस्योत्तरार्द्धे स एवमनुभूतवान् यत् सत्यमेवेश्वरोऽस्ति। पुनः सत्यान्वेषणे तेन प्राणा अपि न गणिता। एष एव तदीय स्वार्थं आसीत् तथानयैव स्वार्थभावनया प्रेरितोऽसौ स्वेष्टवस्तुप्राप्त्यर्थं प्रयत्नमकरोत्। नियमतः स प्रथम सत्यस्य स्थूलपरिभाषां कृतवान् तथोक्तवान् यत् अस्माकं जीवनस्य समस्यायाः सम्बन्धेऽस्माकमन्तराल यत्किमपि समाधान प्रस्तौति, तदेव सत्यमस्ति। तस्यान्तरालस्य तात्पर्यं तदन्तःस्थितध्वनि ( Inner voice ) गतमासीत्, यद्वाह्यप्रभावशून्यमस्ति, तथा सत्यवदनं यस्य स्वभाव एव विद्यते। अतः सत्यान्वेषणे स स्वान्तराल वाह्यप्रभावशून्य कर्त्तुं प्रारब्धवान् तथा स्वभावतस्तत् सत्य वदेत् तथाभ्यास कर्त्तुं तेनारब्धम्।

एतदाध्यात्मिकान्वेषणकृते तस्मै प्रयोगशालाया एकस्या आवश्यकतासीत्। स्वसंस्कृते स्वसंस्कारस्य चानुरूप स परम्परागतविधिभूत पूजापाठादिक व्रतादिकञ्च स्वीकृतवान्। परन्तु तस्य सर्वश्रेष्ठा विशेषतैषासीत्, यत् स वनगिरिगुहा निर्जनस्थानञ्च परित्यज्य स्वार्थपीडित संघर्षपरिपूर्णमशान्त मानवसमाज सत्यान्वेषणार्थं प्रयोगशालारूपे स्वीकृतवान्।

---

1 The Selected works of Mahatma Gandhi–Vol I Page XIX Nawjeewan Publishing House, Ahmadabad.

मानवसमाजस्य यो हीनतम अभावग्रस्त', शोषित, पददलितोऽस्पृश्यत्वेन घोषितो वर्ग आसीत्, तस्यैव समस्याना समाधानान्वेषणे तेन जीवन यापितम्। उल्लिखितवर्ग स स्वस्मादभिन्नममन्यत तथा यत्रासावुल्लिखितवर्गाद्भिन्नोऽमन्यत तत्रैव स स्पष्ट विद्रोह चकार तथा स्वदृढास्थाया. कारणात् विरोधिना हृदयपरिवर्त्तन कृतवान्। गर्जेरा ( गुर्जर ) गुजरात-ग्रामे यदैकस्या सभायामस्पृश्या पृथगुपवेशिता अभवन् तदैतत् तस्मा असह्य जातम्। तदा च तेन यदुक्त तत् स्वामिना भगवदाचार्येण स्वकाव्यग्रन्थ एवमुक्तवान्—

भिक्षो भवेय भुवि दण्डशोऽहं तथा परावृत्य निजाश्रमाय,
गच्छेयमेतन्न पर समीहे, परामवेद् दुर्बलमत्र कोऽपि ॥१॥[1]

मानव-समाजात् उल्लिखितदुर्बलताना निवारणाय स विचारितवान् यत् अन्यकारणातिरिक्ता पराधीनतैव भारतीयाना चतुर्दिग्ह्रासस्य मुख्यमाधारभूत कारणमस्ति। यदि पराधीनता निर्मूल्य भारतीयेभ्य स्वतन्त्रवातावरण प्राप्येत तदेहत्याना निवासिना दु ख दैन्यादिक विनष्ट भविष्यति। एतदेव विचार्य तेन राजनीतिरेव स्वप्रयोगशाला कल्पिता, यतो राजनीतावधिकारादृतेऽर्थात् वैदेशिकशासनमपामृज्य स्वदेशीयशासनस्थापनविना देशदैन्य निर्धनत्वञ्च नापगते भविष्यत। स विलोकितवान् यदस्या परिस्थित्यामेतदेव सत्यमस्ति यत् स्वतन्त्रताप्राप्ति विना देशे लोक सग्रहस्य कार्यं भवितु न शक्नोति। निर्धनता नापगता भवितु शक्नोति, देशश्च नोद्धियतु शक्नोति। एतादृशस्य सत्यस्यान्वेषण राजनैतिकप्रयोगशालायामेव सम्भवमासीत्। फलत महात्मा गाधी राजनीतिनेतृत्व स्वहस्ते गृहीतवान्। राजनीतिनेतृत्व कुर्वन्, एतन्न विस्मर्तव्य यत्, स सत्यान्वेषणमेवाकरोत्। तस्य स ईश्वर एवाभीष्ट आसीत्, यदर्थं स उत्कण्ठित आसीत्।

राजनीति-प्रयोगशालाया पराधीनताया मूलप्रश्नस्य समाधानान्वेषणन्तु तस्मै परमावश्यकमासीदेव परमेतदपि चिन्तनमभीष्टमासीद्यत् निर्धनताया रोग कथमपगतो भवेत्। शोषित-शोषण कथ समाप्त स्यात्। अस्पृश्यताया व्याधि कथ नश्येत्। राजनैतिकप्रयोगस्यापि सीमा निर्धारित आसीत्। प्रथमा वार्त्तेयमासीद्यदेतदन्त शस्त्रास्त्रयो वर्जनमासीत्। मनसा, वचसा, कर्मणाऽहिंसकोभूत्वा राजनीत्या भागग्रहणमावश्यकमासीत् ) द्वितीया वार्त्तेयमासीद्यत् साध्य यावत्पवित्रमासीत् तदनुकूल साधनमपि पवित्रं रक्षणीयमभवत्। राजनैतिकस्वतन्त्रताप्राप्ति यदि प्रथम पवित्र-

---

१ भारत पारिजातम्, प्रथमो भाग, अष्टादशसर्ग, श्लोक-सख्या—१२, पृ० ३५१

लक्ष्यमासीत्तदा सत्याहिंसात्मकसाधनैः तत्प्राप्तिरपि प्रथमं पवित्रंलक्ष्यमासीत्। असत्यस्य हिंसायाश्च प्रयोगः पूर्णतया वर्जित आसीत्। ऋते शास्त्रयोः प्रयोगात् वैदेशिकशासनस्य बहिष्कारः परो नवीनमार्ग आसीत्। महात्मा गान्धी स्वप्रयोगेण सामूहिकाभ्यासद्वारेण चैनं नव मार्गं सक्रियमापादितवान्। देशार्थं राजनैतिकस्वतन्त्रताप्राप्तौ स सफलतामपि प्राप्तवान्। परमार्थिकस्वतन्त्रतार्थं अहिंसकमार्गस्यानुसन्धानमिदानीमवशिष्टमासीत्, परं महात्मन इहलीला समाप्ता। तस्यार्थिकविचाराः तस्य जीवनेन, लेखैरेव तद्द्वारेण पालितानामार्थिकसस्थानां कार्यकलापेनैकत्र कर्त्तुं शक्यन्ते, यदाधारेऽहिंसामूलकस्यार्थशास्त्रस्य प्रारम्भिकशिलास्थापनं कर्त्तुं शक्यते। संक्षेपेणात्र तस्य तेषामेव विचाराणामुल्लेखोविधीयते।

( १ ) पाश्चात्यमर्थशास्त्रमावश्यकताया चिन्तनेऽप्याधृतमस्ति। तदनुसारं व्यक्तेरावश्यकतायाः सवर्द्धनेन तत्प्राप्तु तदनुरूपः प्रयत्नोऽपि वर्द्धते, येन वस्तुनः उत्पादनं जायते। अभावो नश्यति। जीवनस्तरश्चोच्चैस्स्थितोभवति। महात्मा गान्ध्यपि मानवेन क्रियमाणस्योत्तरोत्तरवृद्धिशीलस्य प्रयत्नस्य पक्षेऽस्ति। परं तदर्थमावश्यकता सा विद्यते या धर्माविरुद्धा भवेत्। 'धर्माविरुद्धावश्यकता वर्द्धताम्' एतदेव तदीयं मन्तव्यं विद्यते। तदनुसारमावश्यकतासवर्द्धनातिरिक्तं तन्नियन्त्रणं सम्यता वर्त्तते। नियन्त्रणार्थमेव तेनावश्यकता-सीमा निर्धारिता। स च सीमारेखोल्लिखितधर्माविरुद्धशब्देन व्यक्ता कृता विद्यते। एतादृश्यावश्यकतया प्रेरितो यः प्रयत्नो भविष्यति, तस्यैवाध्ययनं गान्धिविचारधारायामाधृतमर्थशास्त्रंकरिष्यति। स्पष्टमस्ति यदेतदर्थशास्त्रमन्यादृशमर्थशास्त्रंभविष्यति।

( २ ) अर्थशास्त्रं विज्ञानन्त्वस्ति परं तेन व्यावहारिकार्थशास्त्रेण भाव्यम्। यत्र भारते प्रमुखप्रश्नो निर्धनता निवारणस्यास्ति तत्रार्थशास्त्रस्यैतेनोद्देश्येन भवितव्यं यत् तदीदृशमध्ययनं कुर्यात् यदस्य प्रश्नस्य कृते किमपि समाधानं निःसृतं भवेत्। महात्मनः दृष्टयार्थशास्त्रं सोद्देश्यं भवेत्, यदभावग्रस्तमानवं दरिद्रतायाः कर्दमात् हस्तमादाय सादरं बहिरानयेत। जनकल्याणं लोकसंग्रहो वा तस्योद्देश्यं भवेत्।

( ३ ) तद्दृष्ट्या सहजे ग्रामीणार्थिकसंघटने मानव विकासकस्यार्थिकवातावरणस्य रचयितृणां मानवप्रयत्नानामध्ययनमर्थशास्त्रस्य विषयो भवेत्।

( ४ ) पदार्थानामुत्पादनं वृद्धिगतं स्यादेतद्विधो यत्नोऽवश्यं भवेत्, परन्तु समस्तवस्तूनामुत्पादनमेककलाकारद्वारेण स्यात्, येन कलायाः कलाकारस्य चोभयोरुत्तरोत्तरो विकासो भवेत् तथा कलाकार आत्मसंतोषस्यात्मगौरवस्य सुख

प्राप्नुयात् । सर्वप्रकारस्योपभोक्तुर्वस्तूनामुत्पादनमस्मिन्नाधारे भवेत्, येन मानवता सुरक्षिता स्यात् ।

( ५ ) व्यवसायस्य संघटनं लघ्वायतं स्यात्, येन मानव-मानवयो मध्यस्याथवा सेवकमध्यस्य विप्रकर्षो न्यूनो भवेत्, तथा मानव परस्पर सहानुभूते व्यवहारं रक्षेत् । लघ्वायतव्यवसायस्य संघटनेन पारिवारिकभावनाया वृद्धि सम्भाव्यते तथा पारिवारिकाकस्मिकविकृते निराकरणमपि सम्भवमस्ति ।

( ६ ) प्रत्येकार्थिकप्रयत्ने शारीरिक श्रम प्रतिष्ठित मन्यमानस्य प्रत्येकजनस्यैतत् कर्त्तव्य भवेत् यत् स प्रतिदिन स्वावश्यकतापूर्त्यर्थं शारीरिकश्रममवश्य कुर्यात् । एतेन मानवविकास शीघ्र सम्भाव्यते ।

( ७ ) नापणे विक्रयार्थं किन्तु स्वप्राथमिकावश्यकताना पूर्त्यर्थमुत्पादन कर्त्तव्यम् । उपभोगादवशिष्टस्यैव विक्रय कुर्यात्, अद्य त्वर्थशास्त्रमापणस्यैवार्थशास्त्रमस्ति, परन्तु यस्मिन्नापणे केवल लाभस्यैव ( बचत ) वस्तुनो विक्रयोभविष्यति, तदापणोऽद्यतनापणापेक्षया नितान्त भिन्नो भविष्यति तथा तस्यार्थशास्त्रस्य स्वरूपमपि भिन्न भविष्यति ।

( ८ ) यन्त्रस्य ( मशीनस्य ) तावत्येव प्रतिष्ठा भवेत्, यावदावश्यकी वर्तते । तदुपयोगश्च तत्रैव स्यात् यत्र तदीयावश्यकता विद्यते । यन्त्रस्य सर्वत्रोपयोग लाभकरो न भविष्यति । यत्र श्रमिका निरर्थका उपविष्टा भवेयुस्तत्र यन्त्रस्य प्रतिष्ठापन मितव्ययिताया उदाहरण न भविष्यति । यत्र श्रमिका न भवेयुस्तत्र यदि यन्त्रस्योपयोगो भवेत्तदा नात्र विप्रतिपत्ति स्यात् ।

( ९ ) फाटकापणो ( Dealings of future ) न प्रोत्साहितो विधेय । तेनैकस्यैतादृशस्य समूहस्याविर्भावो जायते यो विना शारीरिकश्रम नानाप्रकारैरदोभनै साधनै धनार्जन करोति तथा स्वान्त स्थित मानव मन्त्रे परिवर्तित विदधाति, यस्तदा भावस्यापचयोपचयविषये घोषति तथा स्वस्वार्थसिद्धयर्थमावश्यकमपचयोपचयौ कारयति येन जनसाधारणस्याल्प कल्याण भवति, कष्टस्य च मात्रा वर्द्धते ।

( १० ) यथाविधि मुद्राव्यवहारो न्यूनो विधेय । यत्र ग्राम विनिमयस्यैवादेशो भवेत्, अथवा तदाधार एव व्यावसायिक व्यापारिक वा संघटन भवेत्, तत्र मुद्राव्यवहार स्वभावत न्यूनो भविष्यति । परमेतदाधारे देशीय, विदेशीयोऽन्तर्देशीयो वा व्यापार संघटनीय । यत एतदाधारे विश्वव्यापिनि संघटने जात एव मुद्राव्यवहार न्यूनो विधेय शक्यते । परन्तु सम्प्रति देशीयान्तर्देशीयमुद्राणामावश्यकता

दिनानुदिनं वर्द्धत एव तथा वर्द्धिष्यते। यतो नवप्रकारेण चिन्तनाम कार्याय च कोऽपि समर्योजन तत्परोनास्ति।

( ११ ) ग्रामं ग्रामसमूहं वैकाकं मत्वार्थिकयोजनाया. विकेन्द्रणप्रणाल्या कार्यान्वियनेनाल्पव्ययेनाल्पसमयेनचाधिकं कार्यं भवितुमर्हति तथा साधारण जनताधिकं लाभान्वितानुप्राणिता च भविष्यति। तत्पश्चात् महत्यायते विकेन्द्रित-संस्याना सहायतार्थं केन्द्रितसंघटनस्योपलब्धि. कर्त्तव्यो भविष्यति। यत्र विकेन्द्रितैकाका एव प्रमुखा सदस्यता प्रदातुं समर्था. भविष्यन्ति।

गाधिन एतस्यामेव विचारधारायामाधृतस्यैकस्य नवीनार्थशास्त्रस्य रचना भवितुं शक्नोति, मदनुसारमार्थिकप्रयत्नानामेतादृशं संघटनं संपत्स्यते, यदहिंसात्मकं भवेत् तथा मानवस्य सुखसौविध्येन सह तन्नैतिकस्तरमुच्चै रक्षितुं समर्थो भवेत्।



समादर कुर्वन्नप्यसौ तामवैज्ञानिकी ब्रवीति । स विस्मरति यदय समय विज्ञान-स्यास्ति, अत मानवसमाजाय गान्धिन आवश्यकता जाता तथा युगावश्यकतैव युगपुरुषाणा जननी जायते । युगेऽस्मिन् सहास्तित्वस्य वार्ता साधारणवार्त्ता जाता विद्यते । पर मानव नि सन्देह ज्ञातवानिद यत् स्यानामान्यवस्तुसहास्तित्व पर विज्ञान-हिंसया सहास्तित्वमवाञ्छनीयमस्ति । यत एव सति मानवस्यास्तित्वमेव समाप्त भविष्यति । अतो मानवेन विज्ञान हिंसयो कस्याप्येकस्यैकस्या वा चयन क्रियमाणमावश्यक जायते । स्वभावतो बुद्धिमान्मानव मानवकल्याणाय विज्ञान सरक्ष्य हिंसा त्यक्तुमिच्छति। अर्थादस्मिन् वैज्ञानिकयुगेऽहिंसा केवल नैतिकी वाध्यात्मिकयावश्यकतैव नास्ति, प्रत्युत मानवस्यात्मरक्षायै भौतिक्यपि जाता विद्यते । अर्थात् येन विज्ञानेनैवदाहिंसात्मकप्रवृत्तो नैतिकी तथाध्यात्मिकीरुक्त्वा मानव एता अनादृत्य एताभ्योऽहिफेनपुटिकाकयनाय शिक्षित, तेनैव विज्ञानेनाद्य मानव-समाजोऽहिंसास्वीकरणाय वाध्य क्रियमाणोऽस्ति ।

अतएव गान्धिनो जन्माहिंसाया एतन्नववार्त्तकथनायापि नाभूत् । अजातेऽपि गान्धिन्येषा वार्त्तेतिहासस्यानिवार्यावश्यकतावशात् शोचनीयाभविष्यदेव जनेभ्य । तैं वाध्यै हिंसामुक्तिमार्गोऽन्वेषणीयोऽभविष्यत । गान्धिजन्मैतन्मार्गप्रदर्शनायैवाभूत् । अतएव गान्धिदान गान्धि-दर्शन न प्रत्युत गान्धिमार्गो विद्यते । एतदेव कारणमस्ति यदित पञ्चविंशतिवर्षपूर्वं 'गान्धिजयन्ती' कृत याचिते सदेशे स उक्तवान् यत् अय दिवस 'गाधीजयन्ती नास्ति, प्रत्युत चर्खा—( तातव चक्र ) जयन्ती वर्त्तते । स एतन्नोक्तवान यदेष दिवसोऽहिंसाजय तोरूपेण मा यो भवेत । यत तस्य विशेष-सदेश 'अहिंसा' न वर्त्तत प्रत्युत तातव ( चर्खा ) चक्रमस्ति । तस्मै तातव-( चर्खा ) चक्रमेवाहिंसाप्रतीकमासीत । अर्थात तातवचक्रमेवाहिंसामार्गोऽस्ति । एतत्कथमिति विचारणीय वस्त्वस्ति ।

एतत्सत्यमस्ति यदद्य विश्वमानवा हिंसामुक्तये व्याकुला सन्ति। तेऽन्ताराष्ट्रिय-सम्मेलने शान्त सकल्प विदधति । ते निरस्त्रीकरणस्य वार्त्ता कुर्वन्ति, परन्तु विश्वस्य प्रत्येकदेशस्य व्याकल्प ( वजट ) दर्शननानुमीयते यत् ससारस्य प्राय सर्वे देशा सैनिकशक्तिमबद्धने सलग्ना सन्ति । इदानीमेषा विचित्रा वार्त्ता विद्यते । चिन्तनस्यावश्यकतास्ति यत् शान्त्यन्वेषणे युद्धसज्जता कथ ? एतस्या मुख्य कारण-द्वयमस्ति । प्रथम कारणमेतदस्ति यत् मानवबुद्धि हिंसामुक्त्यै स्यानाम यावती व्याकुला, पर तस्या सस्कारे हिंसा बद्धमूला वर्त्तते । द्वितीयकारणमेतदस्ति यत् मनुष्य एतद् ज्ञातवान् यत् अद्यतनयुगे कस्या अपि समस्याया समाधान हिंसात्मक-रात्या न भवितु शक्नोति । यत यदि हिंसया मनुष्यस्य कस्या अपि समस्याया

समाधानस्य चेष्टा भवेत् तदा समस्याया अन्तः स्यान्नवा परं येषां सम[illegible]मन्तस्तु भविष्यत्येव। परन्तु समस्यायाः समाधानेऽहिंसायाः शक्तौ तेषां विश्वास न भवति। एतदेव कारणमस्ति यत् अद्यतन मानवः किंकर्त्तव्यविमूढोऽस्ति। किंकर्तव्यविमूढो मानवः अवश्यं भाविनं नाशं पश्यन्नपि प्राचीनं मार्गं त्यक्तुं साहसं न करोति। एतदेव कारणमस्ति यत् प्रत्येकदेशस्य राष्ट्रनायकः अन्ताराष्ट्रियायां महत्यां अशान्त्यां सर्वदा वक्ति "गुलिका चालनं" निषिद्धमस्ति—इत्येवं वदति, परन्तु स्वराष्ट्रस्यान्तरिकाशान्ति-स्पर्द्धायां गुलिकां चालयति। एतदेव च कारण-मस्ति यत् ये सम्पूर्णदेशे शान्तिप्रतिज्ञा-पत्रे हस्ताक्षरं कारयन्ति, ते मुम्बय्यां, प्रयागे, वाराणस्यामहमदाबादे वा इष्टिका-पाषाण-वर्षणारम्भं कुर्वन्ति। यदि वयमस्मान वस्यामपि यात्रायामस्वीकृतायामिष्टिका-पाषाण-वर्षणं कुर्मः, तदा मिस्रेण, हंगरी द्वारेण चास्वीकृतायां यात्रायां स्म, इङ्गलैण्डो वा यदि स्वहस्तगतं पदार्थं प्रत्येतुं वाञ्छति तदा तयोः कथं निन्दा?

अधुनाऽऽशिष्टा वर्तते संस्कारवार्ता। सहस्रवर्षेभ्यो मनुष्या आत्मोन्नतिहेतोः एकस्य विशिष्टस्य दर्शनस्य सृष्टिं कृतवन्तः। ते मन्वते यत् संघर्ष एव जीवनमस्ति तथा प्रतिद्वन्द्वितैवोन्नतिमूलमन्त्रो विद्यते। एतादृशस्य जीवनस्य स्वाभाविकपरिणति हिंसैवास्ति। यदा प्रतिद्वन्द्वितायां विजयं मानवलक्ष्यतां व्रजेत् तदा मानवो येन केनापि प्रकारेण प्रतिद्वन्द्विपराजयमेव चेष्टिष्यते। अन्ततः हिंसात्मकास्त्राणां प्रादुर्भाव एव कथं जातः? प्रतिद्वन्द्वितायां विजयप्राप्तेराशायाः पूर्वरूपमेव नु? अतएव यदि मानवः हिंसायाः मुक्तिं कामयते तदा स प्रथममेव जीवनदर्शने मौलिकं परिवर्तनं कुर्यात्। स जानातु यत् संघर्षो जीवनं नास्ति न वा प्रतिद्वन्द्वितायामेवोन्नति-प्रेरणा वर्तते। यदा जीवनदर्शन एव मौलिकपरिवर्तनं जायते तदा सम्पूर्णं समाजस्य व्यवस्थायां सम्भाव्यते तथा जीवनक्रमेऽप्यामूलपरिवर्तनं करणीयं

भावे'-महोदय विश्वशान्त्यर्थं शासनमुक्तसमाजस्य स्थापनाया लक्ष्ये सम्पत्ति-विसर्जनान्दोलन करोति।

अत्रैव प्रश्न उत्थितो भवति यत् किं पूर्णशासनमुक्ति व्यावहारिकी वर्त्तते किम ? व्यवहार आदर्शश्च पृथक् वस्तुनी न स्त । मनुष्य आदर्श-प्राप्त्यर्थं व्यवहार करोति, तदा व्यवहार आदर्श-प्राप्ते मार्ग एवास्ति। प्रथमत एतत्स्पष्टमस्ति यत् शासनमुक्तिपथे प्रथमसोपान शासननिरपेक्षतास्ति। अर्थात् सधिकाले यदि कमपि सीमान यावत् शासनसस्थाया आवश्यकता भवेदपि तदा समाजस्य नित्यजीवने मनुष्य एतन्निरपेक्ष तिष्ठेत्। अर्थात् समाजस्य नित्यजीवने शासनसस्थाया अस्तित्वस्यानुभवो न भवेत्, सा समाजजीवने पुष्पमालाना सूक्ष्मसूत्रवत् स्थास्यति। पूर्णविकसितकुसुमाना मालाग्रथनाय सूत्रस्यावश्यकता भवति। परन्तु जना तामेव माला मालासज्ञया व्यवहरन्ति, यस्या सूत्र न दृश्येत। यदि तत् दृश्येत तदा मालाया वैरूप्य कल्प्यते। तथैव शासननिरपेक्षसमाजे पूर्णस्वावलम्बिन एकाकस्यैकसूत्रे बन्धन विधाय राष्ट्रनिर्माण कियत्कालकृते सभव भविष्यति। परन्तु यदि मानव नित्यजीवने राज्यसस्थाया अस्तित्वस्यानुभव कुर्यात्, तदा ज्ञातव्य भविष्यति यत् समाजो नीरसोजात। स्पष्टमस्ति यत् यदि मानवकृते जीवन राज्यसस्थानिरपेक्ष विधेयमस्ति, तदा तेन स्वकीयाना नित्यावश्यकताना पूर्ति स्वय विधेया भविष्यति। प्रकृते साधने श्रमार्थ-व्ययेनोत्पादन भवति। अद्य ससारस्योत्पादनस्य प्रक्रिया सञ्चितसम्पत्ति-( पूँजी ) मूलिकास्ति। अर्थात् श्रमसचितसपदो सञ्चितसपद् मुख्या स्वामिनी वर्त्तते, श्रमश्च तदधीनो गौणोवर्त्तते। शासनसस्थाया मुक्त्यर्थं गान्धी सञ्चितसपदाधृतोत्पादनपद्धति परावर्त्य श्रमाधृतोत्पादनपद्धति प्रवर्तिता वाञ्छति स्म। स कामयते स्म यत् प्रकृतिसाधने प्रत्यक्षश्रमेणैवोत्पादन भवेत्, तदैव मनुष्य स्वावलम्बी भूत्वा स्वतन्त्रो भवितु शक्नोति। एतदेव कारणमस्ति यत् गाधी तान्तवचक्रमहिसाया प्रतीक मनुते स्म। अतएवाहिंसकसमाजप्राप्त्यर्थं मानवाय शासनमुक्तस्य तथा सञ्चितसम्पत्ति-निरपेक्षसमाजस्य स्थापनमेकमात्र मार्ग विद्यते। एतादृशी गान्धिनो मान्यता विद्यते स्म।

मानवसस्कारे तथा समाज-व्यवहारे हिंसोत्पादनस्य द्वितीय कारण वर्गविषमता वर्त्तते। एव गम्भीरतया विचारेण स्पष्टतया प्रतीत भविष्यति यत्, वर्गविषमताया स्थिति काचन स्वतन्त्रा स्थिति नास्ति। राज्यसञ्चालितव्यवस्थायास्तथा सञ्चितधनाधृतोत्पादनपद्धत्याश्च परिणतिरेव वर्गविषमताया परिस्थितिरस्ति। पुरातनशास्त्राणामृषीणा कथनमस्ति यत् सत्ययुगे एक एव वर्ण आसीत्। मानवसमाजस्य प्रारम्भे मनुष्य द्वयो वर्गयो विभक्तोनासीत्। सर्वे मनुष्याउत्पादकवर्गीया आसन्।

ते प्रकृति-साधनेषु स्वश्रमं कुर्वन्त आसन् तथा उत्पाद्य खादन्ति स्म तथा परस्परं मिलित्वा स्वसमाजस्य व्यवस्थामकुर्वन् । पश्चात् राज्यप्रथाया सञ्चितार्थवादिन्या अर्थनीते कारणात् समाजे सेवकनामधारिणएकस्यानुत्पादकस्योपभोक्तृवर्गस्य सृष्टिर्जाता । प्रारम्भे द्विमेवर्गौ पुरोधोनाम्ना सामन्तनाम्ना चाविर्भूतौ । मनुष्यो यदा तं सम्यक् ज्ञातवान्, तदा तं वर्गं विघटितवान् ।

परन्तु शीघ्रमेव तत्स्थाने रूपान्तरितो भूत्वा स संचितार्थवादिवर्गनाम्नाविर्भूत । मानवसमाजोऽद्येममपि विनाशयितुं संलग्नो विद्यते । परन्तु सेवका इमेऽद्य तत्स्थाने व्यवस्थापकवर्गरूपेण संघटिता भवन्त सन्ति । अस्य वर्गस्य यथा-यथा पुनर्जन्म भवदस्ति, तथा तस्य कलेवरं प्रवर्द्धितो भूत्वा तस्य व्यापकतापि वर्द्धमानास्ति । सामन्तवादापेक्षया सञ्चितधनवादोऽधिक व्यापकोऽभवत् तथाद्य सञ्चितधनवादापेक्षया व्यवस्थापकवादस्य विस्तारः शतगुणाधिको भूत्वा समाजस्याङ्ग-प्रत्यङ्गेषु एव प्रकारेण प्रविशन्नस्ति, यत् वर्त्तमानजगतः समक्षे मुख्या भीतिः सर्वाधिकारवादस्यैव भवन्ती विद्यते, य जनमतस्यापेक्षां विनैव सम्पूर्णविश्वं ध्वंसोन्मुखं नयन्नस्ति ।

एतदेवकारणमस्ति यद्विनोबा राज्यस्य सञ्चितधनस्य च विघटनचेष्टाया प्रथमचरणं श्रेणी-विषमता-निराकरणं स्वीकृतवान् तथैतदेव कारणमस्ति यत् गान्धी शरीरश्रमेणोत्पादकानां स्वावलम्बिसमाजस्य स्वप्नं पश्यति स्म । स स्वकीयसमस्त-कार्यक्रमेषूत्पादकश्रमाय मुख्यं स्थानं ददाति स्म ।

काङ्ग्रेसस्य विधाने सूत्रकर्त्तनम्, सदस्यताया नियमरक्षाया चेष्टा, चर्खासंघे हस्तनिर्मित-वस्त्र-विक्रयार्थं सूत्रसङ्केतनियम, य स्वहस्ताभ्यां नोत्पादयेत् स भोजनाधिकारवञ्चित, एतन्मान्यताया प्रचार, स्वाश्रमेषु मलस्वच्छीकरणादारम्य दुपैरयोगस्य चादिसकलकर्मणां स्वहस्ते सम्पादनस्य नियम —इत्यादिकार्यक्रमा-एतस्यैव सिद्धान्तस्य पूर्त्यर्थं रचिता अभवन् ।

स्पष्टमस्ति यत् समाजे चेत्व्यवस्थापकवर्गस्योत्पादकवर्गस्य च सृष्टिर्भविष्यत्तदा तदुन्मूलनं विधाय वर्गविहीनवर्गीयस्य समाजस्य स्थापना क्रियेयास्ति तदा स वर्गं उत्पादकवर्ग एव भवितुं शक्नोति ।

इदानीं प्रश्न एषोऽस्ति यत् समाजस्यैतद्व्यवस्थापकवर्गस्यानुत्पादकोपभोक्तृणां विघटनं कथं भवेत् ? एतस्य द्वे एव मार्गे भवितुं शक्नुतः वर्गसंघर्षो वा वर्गपरिवर्त्तनम् । मानवसमाजस्य यस्मात् हिंसावादान्मुक्तिः स्वतन्त्रविश्वस्य लक्ष्यमस्ति, तत्सिद्धौ वर्गसंघर्षस्य चिन्तनं विडम्बनामात्रमस्ति । अतोऽवशिष्टपरिस्थितौ वर्ग-परिवर्त्तनादृते श्रेणीनिराकरणस्य नान्य कश्चन मार्गोऽस्ति । अर्थादद्यतन

समस्यासमाधानेत्वेतदावश्यकमस्ति यद्बुद्धिजीविनामधारी शासकवर्गः श्रमजीवी उत्पादकः भवेत् । बुद्धिः जीविकायाः साधनं न भूत्वा श्रमस्य पूरकं तथा समाजस्योत्पादनं भवेत् । एतस्यैवोद्देश्यस्य पूर्त्यर्थं गान्धी यत्र प्रत्येकमानवाय शरीरश्रमस्यावश्यकतामवदत्, तत्रैव सम्पूर्णसमाजं सुसंस्कृतं बुद्धिमन्तमुत्पादकं श्रमिकं च विधातुं शिक्षायामामूलपरिवर्त्तनस्यमन्त्रमददात् । वस्तुतः गान्धिनः 'नई तालीम' नवशिक्षैव अद्यतनसमाजस्य समस्यायाः समाधानस्य स्थायी तथैकमात्रं मार्गोऽस्ति । यतः समाजस्य प्रत्येकव्यक्तिः शैशवावस्थाया एवोत्पादकश्रममाध्यमेन बुद्धेः संस्कृतेश्च विकासं करिष्यति । तदा अद्य योऽनुत्पादकवर्गोऽस्ति तस्य संतानः उत्पादकवर्गे परिणतो भविष्यति । तथैव सत्यामुत्पादनप्रक्रियाया शिक्षामाध्यमभूतायामद्य योवर्गः उत्पादनकार्ये संलग्नतया पूर्णशिक्षार्थमवकाशं न प्राप्नोति, सोऽपि बुद्धेः संस्कृतेश्च विकासायावसरमधिगमिष्यति । एवं गान्धिप्रतिपादितशरीरश्रममूलकवर्गपरिवर्त्तनस्य सामाजिकक्रान्तिः तथा ( नई तालीम ) नवशिक्षायाः शैक्षणिकक्रान्तिः मिलित्वा वर्तमानयुगस्य सृष्टिसमस्यायाः समाधानमुपस्थितं कुरुतः ।



# महात्मगान्धिनः शिक्षादर्शनम्

श्री वाचस्पति द्विवेदी, एम० ए० (द्वय) एम० एड०, साहित्याचार्यः

शिक्षाक्षेत्रे भारतेतिवृत्तं गौरवास्पदम् । अस्मत् प्राच्यशिक्षाशास्त्रिभिः शिक्षायाः प्रत्येकं मूलभूततत्त्वमनुशीलयद्भिरुपनीतशिक्षासरणिर्व्यक्तित्वस्य सर्वांगविकासस्य, सभ्यतायाः संस्कृतेश्चोन्नयने भृशं प्रमापिता । पौरस्त्याचार्यकुलगौरवमय्याः परम्परायाः परिपाकस्वरूपं ज्ञानविज्ञानक्षेत्रेऽग्रणीत्वमादधौ । परं वैदेशिकाक्रमणेन मिथो वैमनस्येन विभक्तं यमनापनमखण्डं भारतं स्वैवयमेव व्यनाशयत् । कथं च यमप्यस्मद्रूपं स्वमूलं संरक्षत् ।

प्रगतिरवरुद्धा, येनापि प्राचीनज्ञाननिधिः संरक्षितः । एतदन्तरेऽऽङ्ग्ल-विज्ञानप्रगति-भरितमानसं सक्षोभयामास । आङ्ग्लदेशीया अस्माकमुपरि शैक्षिकव्यवस्थान्ययोजयन् । "मैकाले" महाशयैः शिक्षायाः प्रारूपं विहितम् । तेषामेतदेव वचो यत् प्राच्यग्रन्थानामवमूल्यं तद्ग्रन्थपत्रमूल्यमपि न, किं सीराविध सर्वोपलभ्यते ? केवलं लोमप्रतिलोमात्मकमेव वचो वेदपुराणादिषु विहितमस्ति । तत्पाठनस्थाने आङ्ग्लशिक्षापद्धतिरेव प्रचालिता । तैरेव सुनिश्चितं यद्वक्त्वेन भारतीया अपि मानसेन विचारेण च पाश्चात्याः स्युरिति । तैः स्वोद्देश्ये साफल्यं लब्धम् । यदा आङ्ग्लदेशीयशासनपद्धतौ सहायकाः सहस्रशो भारतीयदासाः उच्चतरविद्यालयेभ्यो महाविद्यालयेभ्यश्च सपन्नास्तदानीमेव भारतीयजनजीवनं पतनगर्त्ताद् बहिर्निष्कासयन्तः अस्मत्समक्षं समायाताः महात्मगान्धिनः एतद्दुरवस्थामसहमानाः भारतीयानां विलुप्तात्मविश्वासमुद्बोधयन्तो गौरवमयं प्राच्यस्मृतिचरं स्मारयन्तः पौरस्त्यशिक्षादर्शनमाधारीकृत्य नूतनमेकं शिक्षादर्शनं व्यरचयन्, यद्धि व्यक्तेः सर्वाङ्गीणविकासे वर्तमानावस्थास्वपि सहायकं स्यादिति, एवं वर्तमानातीतयोः सामञ्जस्यं संस्थाप्य नवा शिक्षा समस्थापि । तैरेव स्वसम्मुखं शिक्षायाः नैयम्येतुपेयोद्देश्यस्य व्यवस्थापितम् । वर्तमानस्थित्यनुकूलं तद्विचारा अपि परिवर्त्तनशीलाः, किन्तु कानिचिद् वचांसि सर्वत्र समानानि स्थितानि । जनाः स्वावलम्बिनो भवेयुरिति तदेव शिक्षायाः परमं लक्ष्यं मन्यन्ते स्म ।

चेच्छिक्षा मानवजीविकार्थं न सर्जनात्मिका तदा व्यर्था। तैरेव कथितम्—

हरिजन—सेप्टेम्बर—११-१९३७

शिक्षा सज्ञानाऽपि अर्थप्राप्तिका स्वीकृता। सद्भावप्रमाणेन प्रोक्तं यन्मया शैक्षिकसांस्कृतिविपक्षाय भृशं महत्त्वं वितीर्यते। तदनुसारं संस्कृतिरात्मगुणं, या प्रत्येक व्यवहारं परिपोषयेत्।

भारतीयो व्यक्तित्वस्य, शरीरमानसयोरेवमात्मन. सर्वाङ्गविकास एव शिक्षाया उद्देश्यम्।

भारतस्य प्राच्यसिद्धान्ताप्रतिकूल सच्चारित्र्यमेव शिक्षाया मूलभूतआधार।
गांधीजी जीवनी — पृ० ४०८

देशस्य स्वातन्त्र्यानन्तरं शिक्षाया उद्देश्य किं स्यादिति पृच्छायां त्वरितमेवोत्तरितचरित्रनिर्माणमिति। तेन युगपद्रष्ट्रा विज्ञातमिदं यद्भारतसदृशे चरित्रनिर्माण-समर्थैव सर्वाप्रजा भविष्यति। अस्मन्नेतृभिश्चेदभ्युपगम्येत तदाऽस्मच्छिक्षाव्यवस्था एतद्दुरवस्थामाप्नुयात्। लेखनाध्ययनादिभ्योऽप्यधिकं शक्त्यादिगुणेभ्यो बलप्रदानम्। चरित्रनिर्माणमेव शिक्षाया साध्यमिति।

गान्धिन शिक्षादर्शनस्य मूलं भारतस्य प्राच्यविचारदर्शनमेव न पाश्चात्य-विचारस्रोत। अतादित एव चारित्र्यप्रस्फोटनमेव शिक्षाया परमं साध्यं मतम्।

एतदनन्तरमात्मचिन्तनस्यैवावश्यकत्वमभ्युपगतम्। "या विद्या सा विमुक्तये" इति राद्धान्तावलम्बिनाऽध्यात्मचिन्तनस्यानिवार्यत्वमभिहितम्। ब्रह्मचारिपदं ब्रह्मगवेषणपरमिति प्रयुज्यते।

इतीत्थं जीवनाय वृत्तिसाधनेन सह सांस्कृतिकविकासस्य, चारित्र्यनिर्मितेरध्यात्मचिन्तनस्य च प्रामुख्यमापादितम्। व्यक्ते समाजस्य चावश्यकत्वं मनसि विचार्य शिक्षासरणिर्व्यवस्थापि।

तद्युगानुसारं विद्यार्थप्राप्तिकैव बेशिकशिक्षाया स्तम्भ। अत कुटीरोद्योग-प्रोत्साहनाय श्रमादेश्च श्रैष्ठ्यप्रतिष्ठापनाय बेसिकशिक्षाम् (बुनियादी शिक्षा) आविरकरोत्।

एतेन केनचित् क्रियात्मकप्रयोगेण ज्ञानावाप्त्योत्पादनाय बुद्धेर्विकासाय स्वावलम्बनाय चैषा परमोपयोगिनी आसीत्। शिक्षा मातृभाषामाध्यमेनैव भवितव्या सामवायिकजीवनाय नागरिकताया अपि शिक्षाऽऽवश्यकी। इतीत्थं शिक्षास्थाने

यथारुचि यथाप्रतिभं क्रियात्मकज्ञानादिना बालकानां स्वावलम्बित्वाधानमेवैतच्छिक्षाया उद्देश्यमासीत्।

प्रारम्भेऽस्य विस्तृतिरजनि परं स्वातन्त्र्याधिगत्यनन्तरमस्माभिरेतन्मूलभावनैव विनाशिता। एतेन केवलं सूत्रयन्त्रेण सूत्रोत्पादनन्तेन खादीवस्त्रोत्पादनमिति-संकीर्णएवार्थोऽवबुद्धः। एवेन स्वावलम्बित्वस्थाने परमुखापेक्षित्वमेवालम्बितम्। एतच्छिक्षादर्शनमवबुध्यमानैरस्माभिर्नि सहायाना समाजस्यनिर्धनानामुपेक्षितवर्णानाञ्च शिक्षा आपादिता। परिणामत प्राचीनव्यवस्था तु विनष्टैव, नूतनशिक्षाव्यवस्याभावे समस्तभारतस्य शिक्षानीतिर्निरास्यमुपागमत्। अद्यतन भारतस्य शिक्षादर्शनं किं स्यादिति न निर्दिश्यते। अस्त्वेव गान्धिन शिक्षानीतिर्नाधि सम्भवेत्, पर तच्छिक्षादर्शनमिदानीमप्युपयुक्तमेव। तदाधारीकृत्य चेन्नूतनशिक्षासरणिर्व्यवस्थाप्येत तदा गत्यवरोध दूरीकर्त्तुं शक्यत इति। शिक्षाया अभिन्नाङ्ग धार्मिकशिक्षेति स्वीकृतम्। धर्मो न मानववृत्तीना सकीर्णत्वमपि तु मानवताया स्वद्भरातलं प्रतिष्ठाप्यते, तत्रगते मानवानामौत्सर्गिकन्नैर्बल्यं सहजत एव दूरी भवति। एतद्धि आत्मविश्वाससबलमुद्बोधयति। जीवने नवा दीप्ति समायाति। तस्य धर्मोऽसिदेशकाल सार्वजनीनश्चासीत्। आदितश्चेदुच्चतमादर्शभावना वितीर्यत तदा तन्निर्मयदिवृत्तिरपि समाजोपयोगितामाधातु शक्यत इत्येतदर्थमेव धर्मशिक्षा परमोपयोगिनी। *विन्नयास्मत्रोतिनिदेशन धर्मनाम्ना रक्तवसनेन युपदद्वोद्विग्ना* भवन्ति। परं छात्राणामननुशासनत्व तदीदण्डयभूता महत्तमिहसो समितिविनिर्माय प्रस्तुतीकरणम्। युवकर्ममूलनैव परिज्ञायते, फलत उत्तरोत्तर समं शिक्षाकेन्द्रं दीपाणा चेन्द्रमेव सुसम्पन्नम्। गान्धिनो ज्ञत्वयोतिर्मविष्यदवस्थामीक्षते स्म। अतो मानवधर्मस्यैव शिक्षाया स्वजीवने महत्त्व प्रादात्।

*कतिपयप्रचालितशिक्षादर्शनसन्तुलनाया गान्धिमहाशय सर्वस्मात् पृथगेव* प्रतीयते। प्रकृतिवाद्यनुकूलमयमपि शौक्षणीद्धान्तिकज्ञानविरोधि—"इस्रो" महाशयानुसारं पारम्पर्यरूढिगतशिक्षाविरोधिनाऽपि प्रकृतिवाद्यनुकूलस्य सर्वथा तस्य हेयत्वमवबुद्धम्'। अपित्वादर्शवादस्यैव प्राबल्य प्रत्तम्। अत आदर्शवादिभ्यस्तदधिकं साम्यम्। आदर्शवादी सहजतो मानवमध्यात्मवादिनमभ्युपगच्छति। मानवानामाध्यात्मिकप्रवृत्तय. संस्कृति-कला-धर्मनैतिकादिरूपेऽभिव्यज्यन्ते। गान्धिमहाशय पारिस्थितिर्निर्मिति यास्तृतिशास्त्रमुद्यमिष्यमाणोऽपि आदर्श-याथार्थ्ययो समन्वयबोधाय पक्षपाती आसीत्। याथार्थ्याद् प्रभिन्नो ह्यादर्शोनोपयोगी। अतो व्यक्ति-समाजयोर्याथार्थ्यसमस्या यदा समाधीयेत तेव शिक्षा आदर्शानुकूला भवेत्।

प्रकृतिवादादर्शवादयोर्मध्ये उपयोगितावादो उद्भूतः। "दिवी" महाशयानुसारं

गान्धिनाऽपि क्रियैव ज्ञानस्य केन्द्रमिति स्वीकृतम् । क्रिययैव ज्ञानाधिगतिर्यथारुचि बालकानामधिकमनुकूलता याति ।

अतो बेसिक ( बुनियादी ) शिक्षैव क्रियाकेन्द्रिता समस्थापि ।

इतीत्थं समेषां प्रचलितशिक्षादर्शनानां साद्गुण्यं सगृह्णमाणे नैकं स्वकीयं शिक्षादर्शनं प्रदत्तं यद्धि मानवानां सर्वाङ्गीणविकासाय परमोपयोगि ।

# महात्मगान्धिनामीश्वरदृष्टिः

डॉ० जगन्नाथ पाठकः, साहित्याचार्यः, एम० ए० ( द्वयम् )
पी-एच० डी०

यद्यपि महात्मगान्धिना जीवनस्योद्देश्यभूतं सर्वाङ्गीणं भारतीय स्वातन्त्र्यमासीत् तथापि तेन सुमहत्या सत्यान्वेषिण्या निजमनीषासूक्ष्मेक्षिकया समग्रमेव भारतीयं जीवनं गोचरीकृतमित्यत्र नास्ति संशीतिलवोऽपि । यथाऽऽधुनिका नेतारः केवलां राजनीतिमेवावलम्बमाना देशस्य ऐहिकमभ्युदयमेव सर्वस्वमाकलयन्तो बाह्यदृष्ट्योऽवलोकयन्ते, न तथासन्महात्मानः । तदीया दृष्टिः देशस्याध्यात्मिकदृष्ट्याऽपि समुदयमाकाङ्क्षमाणासीत् । भारतं तु तस्य कर्मक्षेत्रमासीत्, किन्तु तदीयस्य प्रयत्नस्य प्रत्येकस्यैव सम्पूर्णा मानवजातिरेव विषयतामवलम्बते स्म । राजनीतिदृष्ट्या भारतस्य स्वातन्त्र्ये ससिद्धे तेन सर्वथा निजजीवनमध्यात्मपरमेव यापितम् । तदीयाध्यात्मिकी दृष्टिः बोधिसत्वानामिवासीत्, ते न केवलमात्मनो देहस्य मुक्तये प्रयतन्ते परन्तु समग्रस्यापि लोकस्य मुक्तिमाकाङ्क्षमाणा भवन्ति ।

मानवसमाजस्य कृते यद् यदेव हितकरञ्चिन्तनीयञ्चासीत् महात्मगान्धिभिस्तत्र तत्र सूक्ष्मेक्षिकया विचारः कृतः । एवं सत्यान्वेषणशालिनी स्वतन्त्रा च तदीया बुद्धिर्दार्शनिकानां रूढिग्रस्तां सरणिं नापेक्षते स्म, यथा ते केवलं परम्परया विवादमात्रोपजीविनो व्युत्पत्तिप्रदर्शनमेव कुर्वते । एवं महात्मा गान्धी दार्शनिककोटौ परिगणनीयतामभजमानोऽपि विचारकदृष्ट्या तद्भिन्नोऽपि तत्सदृश आसीत् । ईश्वरविषयकं प्रश्नमवलम्ब्य महात्मना विचारो हि प्रायः सर्वविदितः, परं तदीयग्रमायस्याकलनं क्रियेत तदा तदीयं महत्त्वं स्पष्टीकृतं स्यात् ।

महात्मगान्धिना समग्रस्यापि सिद्धान्तस्याधारभूतं यदस्ति तत् सत्यम् एव, तदेव सत्यं तद्दृष्टौ 'ईश्वर', यथा च स्वकीयात्मकथाया भूमिकायां तैर्लिखितम्—

But for me, truth is the sovereign principle, which includes unmerous other principles This truth is not only truthfulness in word, but truthfulness in thought also, and

not only the relative truth of our conception, but the absolute truth, the Eternal Principle, that is God.[1]

इदमेव सत्य महात्मना राजनीतिकेषु वा सामाजिकेषु वा धार्मिकेषु वा सिद्धान्तेषु मणिगणेषु सूत्रमिवानुस्यूतमित्यत्र जीवने घटिताना घटनाना वातावरणस्य च प्रभावोऽपि तदीयविचारनिर्माणे प्रवर्तत इति मत्वा यदि महात्मना जीवनस्यारम्भ परिशील्यते तदा स्पष्ट भवति यत् तस्मिन् ईश्वर सगुणरूपेण बाल्य एव प्रतिष्ठितो बभूव। प्रभूतधार्मिकभावनाप्रवणा तन्माता 'हवेली' ( श्रीकृष्णोपासकवल्लभसम्प्रदायमन्दिर ) गच्छति स्म। बाल्य एव च कयाचिद् धात्रा भय जेतु रामनाम्न उपदेश कृत। एव सस्काररूपेण तदीय चित्तमीश्वरसहगत बाल्यादेवासीत्। पर यथा यथा तेषा चिन्तन गम्भीरतरभावमगत च बभूव तथा तथा तस्मिन् 'रामे' सशोधन जातम्। अन्ततो महात्मना राम ऐतिहासिकत्व परित्यज्य पतितपावनोऽजन्मा किञ्चिदेक तत्त्वमासोत्। एव तदीयो राम माहम्मदाना 'अल्लाहृत्' ख्रिस्तीयाना च 'गोडत' अभिन्न कश्चिद् विलक्षण एव जात।

वस्तुतो रामतत्त्वस्येद सामाजिक विलक्षण सार्वजनीनञ्च रूप गान्धिना न तावत् बुद्धिविलसितम्, किन्तु प्रत्यक्षीकृतमासीत्। सत्यपि विश्वस्मिन् प्रभावशालिनि शाङ्करवेदान्तविचारे इयमीश्वरदृष्टि प्रभाविता नाभवत्। वेदान्तविचारस्य प्रतिपादन स्वामिविवेकानन्दमहाशयेन देशे विदेशेषु च कृतम्, तदवगच्छतामपि महात्मनामीश्वरो विलक्षण एव बभूव। तै स्वविचारस्य प्रकाशन दार्शनिकानामेव पद्धत्या तत्प्रयुक्तपारिभाषिकशब्दप्रयोगपुर सर कृतम्, तथा च तैरेकत्र स्पष्टमुक्तम्—

'I am an Advaitist and yet I can support Dvaitism The world is changing every moment, and is therefore unreal, it has no permanent existence But though it is constantly changing, it has a something about it which bersists and it is therefore to that extent real I have therefore no objection to colling it real and unreal, and thus veing colled and एकान्तवादिन् or स्याद्वादिन्। But my स्याद्वाद is not the स्याद्वाद of the bearned it is peculiarly my own[2]

---

१ पृष्ठम् XV ( My Experience with truth' )

१ 'Young India' जनवरी २१-१९२६ ई०

एवं यद्यपि महात्मानोऽपि सृष्टिजालं 'माया' इति सम्भावयन्ति, तथापि वेदान्तिनामिव तदीयविचारे जगन्मिथ्या नास्ति। वेदान्तिना मुक्तिर्यथा ज्ञानविषया भवति ( ऋते ज्ञानान्न मुक्ति ), परं महात्मानो मुक्तिलाभे आत्मसमर्पणं कृपालाभं च हेतुं परिकलयन्ति स्म ।

इत्यं विलक्षणोऽपीश्वरो यथाकथञ्चित् सामीप्येन वा सादृश्येन वा प्रकारान्तरेण समालोच्यते तदा तस्य वैष्णवानामीश्वरदृष्टिरेव तुलना समारोहति। यथा च श्रूयत एव यत् 'वैष्णव जन तो तेणे कहिये जे पीर पराई जाणे रे' इत्यादि पद्यं तेषा प्रियतरमासीदिति। यथा च महात्मना स्वयमेकत्र निर्दिष्ट यत् तदीया विचारा. कथञ्चित् 'वाद' बुद्ध्या न स्वीकर्तव्या इति। इत्य निर्देशेन तदभिमतमित्येव प्रतीयते यत् तदीयं चिन्तनं सत्यान्वेषणपरम्। सत्यस्य च स्वरूपं सर्वथा मानवोऽ-ज्ञातयैव प्रत्येतुं शक्नोति। यथाऽन्धा कतिपये कस्यचिद् गजस्य विभिन्नमङ्गं स्पृशन्तो भिन्नतया स्वस्पर्शानुकूलमेव मतमात्मन प्रकाशयन्ति तथैव मानवाना सत्यस्य विनिर्णये पक्षपातो भवति। अतएव महात्मभि साम्प्रदायिकानामिव इद-मित्थमित्याग्रहबुद्धि परित्यज्य विश्वजनीनभावनानुगतैरेव स्वातन्त्र्येण ईश्वरचिन्तनं कृतम्।

महात्मान ईश्वरास्तित्वविषये सन्दिहानैर्नास्तिवैर्नैव विवदन्ति स्म। यद् वस्तु प्रत्यक्षमिव यस्य गोचरीभवति तस्य साधने व्यर्थ श्रम इति मत्वा ततो वैमुख्य-मङ्गीकुर्वन्ति स्म ते। ईश्वरोऽस्ति ससारे, तथापि स तत्र पारे स्थित, स हि सर्वात्मना स्वात्मान न प्रकाशयति, यथा कश्चित् कवि सम्पूर्णतया स्वरचनाभिर्न व्यक्तो भवतीति तदभिमतम्।

एवमीश्वरविषये महात्मना स्वतन्त्र सहज च चिन्तन सर्वथा भारतीयाया विश्वजनीनाया आध्यात्मिकदृष्टेरेव परम प्रसाद, यो हि तदीयव्यक्तित्वं परि-शीलयता बुद्धौ सामान्येन परिस्फुरति। तदीयेश्वरदृष्टि सहजा स्वाभाविकी, न तत्र प्रदर्शनस्य कश्चिदवसर। तया साधारणोऽपि कश्चित् आत्मन प्रयत्नेन ईश्वरसाम्मुख्यमनुभवितुमर्हति।



# महात्मगान्धिन ईश्वरदर्शनम्

श्री श्रीरञ्जनसूरिदेव, साहित्याचार्य.

भारतीयविचारधारा प्रायेण दर्शनपरिवेशप्रचुरा वरीवर्त्ति। प्रमाणेन प्रमेयसिद्धिरिति भारतीयदर्शनाना समुद्देश्यम्। ईश्वरवादिदर्शनाना प्रमेयसिद्धिरन्ततोगत्वा हीश्वरतत्त्वसिद्धावेव पर्यवसितेति सुविदितम्। राष्ट्रपिता महात्मा गान्धी परम ईश्वरवादीति को न जानीते। तस्येश्वर खलु गीतोक्तदिशा सर्वव्यापक[1] आसीद्यतो हि स बहुव्यापके सामान्ये विश्वसिति स्म। अपरञ्च, महात्मा गान्धी रामभक्तिविषये दृढविश्वास आसीत्। पर तु रामापेक्षया रामनाममहिम्नि तस्यास्था सुदृढेति तद्विचारमौक्तिकसग्रहे 'मेरा नाम'[2] सञ्ज्ञके पुस्तके बहुधा व्याकृतमस्ति।

हिन्दूधर्मे हीश्वरस्यानेकानि नामानि सन्ति। अनेके जना रामं कृष्णञ्चैतिहासिकपुरुषत्वेन समाद्रियन्ते, अथ च राम दशरथपुत्र मन्यन्ते। स एव राम ईश्वररूपेणेह मर्त्यभूमावततार। तमेव पूजयित्वा नरा दुर्लभा मोक्षपदवीमायान्ति। इयमेव धारणा कृष्णविषयेऽप्यस्ति। अत्र हि कल्पनेतिहाससुद्धसत्यानामेवविध परस्परानुबन्धो विद्यते यदेतेषा पृथक्करण नितरामसम्भवम्। विषयेऽस्मिन् 'ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यह'[3]—मिति मन्यमानो महात्मा गान्धी स्वमनोभाव प्रकटयन्निगदति "यन्मया सर्वाण्यभिधेयानीश्वरस्य स्वीक्रियन्ते, पर तेषु हि निराकार सर्वगतो राम एव मन्मनोलोचनगोचरो भवति। मत्कृते मद्राम सीतापतिदशरथनन्दनत्याख्याभ्या विश्रुतोऽपि सन् सर्वशक्तिमानीश्वर एवेति, यन्नाम्नि हृद्गते सति सर्वदु खानि विनश्यन्ति।"[4]

अहमदाबाद स्थितेन नवजीवनट्रस्टेत्याख्येन सस्थानेन प्रकाशिताया 'गान्धीजी' सञ्ज्ञक ग्रन्थमालाया[5] स्पष्टतयोट्टङ्कितमिद यन्महात्मा गान्धी जनताजनार्दनयो-

---

१ 'ईश्वर सर्वभूताना हृद्देशेऽर्जुन तिष्ठति।'—गीता, १८।६१।

२ मेरा राम गान्धी, प्र० मातृभाषामन्दिरम्, दारागञ्ज, प्रयाग, द्वितीय सस्करणम्, पृष्ठम् ७।

३ गीता, ४।११।

४. मेरा राम, उपरिवत्, पृष्ठम् ८।

५. खण्डम् ११, भाग २, पृष्ठम् १०५।

रैकत्वमनुभवति स्म । नरे नारायणत्वं प्रतिष्ठितमस्तीति मन्यते स्म । यतो हि शरीरभिन्नत्वेऽप्यात्मनोऽभिन्नत्वम् । सूर्यस्यैका मरीचिः परावर्त्तनवैविध्यादनेकत्वमधिगच्छति । परं तु तदुद्गमस्त्वेक एवास्ति । अतएवोक्तं वेदान्तवादिना—'जीवो ब्रह्मैव नापरः ।' जीवे ह्यात्माभिमावेन ब्रह्मत्वप्रतिष्ठैव गान्धिनः ईश्वरतत्त्वदृष्टिः । मानवव्यतिरिक्तो न हि कोऽपीश्वरस्तन्मते इति निश्चप्रचम् । मानवहृदयस्थमीश्वरमतिक्रम्य न हि कोऽपि गच्छेज्जगदीश्वरपदम् । वर्त्तते चोपनिषद्वाक्यम्—'मृत्योर्माऽमृतं गमय ।'

श्रीमच्छङ्कराचार्यस्य तत्परवर्तिनो रामानन्दकबीर-गुरुनानकादेः परम्परायां महात्मा गान्ध्यपि अद्वैतवादस्यैवेश्वरवादस्य वा समर्थकः इत्यत्र नास्ति विचिकित्सावसरः । गान्धिनां मतानुसारेण[1] वस्तुतस्त्वीश्वर एक एव । ईश्वरस्त्वगमागोचरः, बहुजनसमाजानां कृते नितान्तमज्ञातं वस्तु चेति । स खलु सर्वव्यापकः । स हि विना नेत्रं पश्यति, कर्णं विना च शृणोति । स हि निराकारो भेदाभेदरहितोऽजन्मा च । यद्यपि न सन्ति तस्य मातृपितृप्रभृतयः स्वजनाः, तथापि स मातृपितृपत्नीसन्तानादिबहुरूपैः पूजां स्वीकरोतीति तस्यानेकान्नाग्रहः । चित्रं ■ मन्तु काष्ठपाषाणादिरूपैरपि स्वार्चनामङ्गीकरोति । वस्तुतस्तु स खलु नैव काष्ठं नापि प्रस्तरम् । स खलु हस्ताभ्यां सुतरां दुर्धरः । किन्तु यदा स प्रत्यभिज्ञायते तदास्माकमतिशय समीपस्थो जायते । उक्तञ्च गोस्वामिना महाकवितुलसीदासेन—

'सोइ जानै जेहि देहु जनाई । जानत तुमहिं तुमहि होइ जाई ।'

अतो हीश्वरस्य ज्ञाने मनुष्याणामत्यज्ञानात्प्रानुभूयते तत्सान्निध्यम् । व्यापकत्वानुभवं विना तद्दूरत्वभानं स्वाभाविकमेव । सत्स्वप्यनेकेषु दवेषु येषां श्रेयमेवेश्वरं भजत इतीश्वरतत्त्वप्रतिपादने महात्मगान्धिना वाचोयुक्तिरिति सुप्रतिभिविभाव्यम् ।

गान्धिनो मते[2] ईश्वरविषयेऽविदमपि ज्ञेयं यन्महात्मा गान्धी वेद पुराणपौरीश्वरवत्स्वीकरणे नानुभवति सङ्कोचमात्राङ्कालुष्यम् । एवमेव 'जेन्दावस्ता'-'बाइबिल'-'कुरानशरीफ' प्रभृतीनां धर्मग्रन्थानां स्वीकारे नास्ति किञ्चिदपि पार्थक्यं तन्मानने । तन्मते हीश्वरीयः प्रकाशः कस्यापि राष्ट्रस्य जातेर्वा नास्ति स्वीया सम्पत् । ईश्वरस्वरूपस्यैश्वर्यदेव हिन्दूधर्मं समायोजकत्व-व्यापकत्वसनातनत्वादिगुणैरेव परिस्थित्यनुसारं मैत्रमिश्रम्य योद्धुं क्षमस्य । हिन्दूधर्मे प्रतिष्ठितस्येश्वरस्य विषये नास्य पाश्चात्यस्य मतानुयायिनस्त्व वा । हिन्दूनामीश्वरस्याकथापि पर्याप्तस्वातन्त्र्य-

---

1. गान्धीजी-ग्रन्थमाला, उपरिवत्, पृष्ठम् १०९ ।
2. उपरिवत्, पृष्ठम् ११० ।

वेसर' परिकल्पनाप्रकारश्च। भारतीयदर्शनाना विचारवैविध्यस्य मतवैभिन्यस्य चेदमेव कारणम्।

महात्मा गान्धी हिन्दूयवनयोरीश्वरबुद्धि-विषयके विचारवैभिन्ये एकत्वोपस्थापनाय कृतप्रयत्नो दरीदृश्यते। तेन हि सर्वस्मिन् धर्मे सत्याहिंसयो पारमार्थिक सत्ता मृग्यते स्म। स खलु सर्वथा भगवदर्पितेन व्यक्तित्वेन विलसति स्म। स हि वाह्यतोऽभ्यन्तरतश्च ईश्वराधीनं जीवनं यापयति स्म। अतो हि तेनोक्तम्—'अहं हि निन्दास्तुती सर्वशक्तिमति परमात्मनि न्यस्य स्वमार्गे गतिशीलोऽस्मि।'[1] महात्मा गान्धी हीश्वरस्याखण्डसत्ता प्रति भृशं विश्वासशील आसीत्, यतो हि स साम्प्रदायिकविवादसन्दर्भे सतत कथयति स्म—'ईश्वरकृतमखण्डत्वं न हि कोऽपि मनुष्यो खण्डितुं शक्नोति।'[2]

महात्मगान्धिनो मते[3] हीश्वरस्य नास्ति पुरुषाकृतित्व नास्ति च व्यक्तित्व-वैशिष्ट्यम्। किञ्चिद्विशेषणञ्चापि नास्ति। ईश्वरस्तु सर्वतन्त्रस्वतन्त्रः। स हि स्वयमेव नियमरूपेणावस्थित', स्वय नियामको न्यायकर्त्ता च। ईश्वरस्य साङ्गोपाङ्गवर्णनमद्यावधि न हि केनापि कृतम्। सर्वे दार्शनिकाश्चिन्तकाश्च तस्य विराट्रूपमनुभवन्तो नेति नेति तद्विषये प्रवदन्ति। अदृश्योऽदृष्टश्च भगवान् खलु त्रिकालद्रष्टा सर्वदा पूर्णश्चास्ति। एतत्प्रसङ्गे प्रसिद्धञ्चेदमुपनिषद्वाक्यम्—

पूर्णमद पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

रामनाममाहात्म्य प्रकटयता महात्मगान्धिना ईश्वर-प्रतिनिधिभूत रामनाम स्वीकृतम्। रामनामद्वारेण हि स ईश्वर भजते स्म। तन्मते ईश्वरकृतस्य नियमस्य पालनमेवेश्वरजय। तात्त्विकदृष्ट्या यो हीश्वरजीवया साकं तदाकारतामधिगतो नास्ति तत्कृते जपस्यावश्यकता। जप. नामोच्चारण वा यस्य श्वासोच्छवासीभूतं स खल्वीश्वरमय इत्यत्र नास्ति कोऽपि सन्देह.। ईश्वरमयत्व तावदीश्वरजीवयोरभिज्ञाने सहजबुद्धित्वं सप्रीतिपालने सहजभावत्वञ्च।

ईश्वरसामीप्यार्थं प्रार्थनाया सातिशयं महत्त्वमङ्गीकरोति एव महात्मगान्धिमहोदयः। राष्ट्रस्वतन्त्रतायै तत्प्रतिष्ठारक्षायै चात्मसमर्पणविधिप्रशिक्षणस्य प्रथम. पाठ. प्रार्थनैवास्ति। प्रार्थनायै ईश्वरे सत्यपूता श्रद्धा नितान्तमावश्यकी। विनाश्रद्धा सत्याग्रहस्य साफल्यमाकाशकुसुमसदृशम्।

---

१. उपरिवत्, खण्डम् ११, भाग ३, पृष्ठम् २३८।
२. उपरिवत्, पृ० २७४।
३. मेरा राम, उपरिवत्, पृ० १९।

ईश्वरस्य सत्ता मानवेन प्रतिष्ठिता, अथवा ईश्वरो हि मानवेन निर्मित इति कुतर्कविषयं खण्डयन् महात्मा गान्धी ईश्वरस्य स्वयसर्गसर्जकत्वमुपपादयति सतर्कं कथयति च[1] यदीश्वरो हि स्वयमेव सृष्टिः स्वयमेव स्रष्टा। अतो हि कुतस्तन्निर्माणस्य प्रश्नः ? अणोरणीयसो महतो महीयसो ह्योश्वरस्य क्षुद्रमानवेन निर्माणस्य विषय एवोपहास्यतामधिगच्छति। अभियन्ता मानवो हि सेतुरचनायां क्षमः परं नदीप्ररचनायां नास्ति तस्य किमपि सामर्थ्यम्। पीठिकाकरणे क्षमो वर्धकिः काष्ठोत्पादने सर्वथा सामर्थ्यरहितः। मानवा ईश्वरस्य परिकल्पनाप्राचुर्यं कर्तुं शक्नुवन्ति, परं यो नदीकाष्ठयोरुत्पादने सामर्थ्यविरहितः स ईश्वरस्य निर्माणे कथं समर्थो भविष्यति। अनेन विचारवैदग्ध्येन निश्चितमिदं यदीश्वरेणैव मानवो निर्मित इति शुद्धसत्यम्। मानवेनश्वरो विनिर्मित इति तु सत्याभासमात्रम्। मानवस्य रचनापक्षे ईश्वरस्य कर्तृत्वम्, ईश्वरस्य मानवद्वारा रचनापक्षे तस्याकर्तृत्वम्। अतः सिद्धमिदं यदीश्वरः कर्तुमकर्तुमन्यथाकर्तुञ्च क्षमः। निर्गुणत्वात्तस्याकर्तृत्वं सगुणत्वाच्च तस्य कर्तृत्वं सुस्पष्टमेव। एतद्विपरीतं कर्तृत्वाकर्तृत्वयोरुदासीनोऽपीश्वरः परिकल्पनायामायाति। निषेधात्मकत्वं विध्यात्मकत्वं तदुभयनिष्ठत्वञ्च सर्वं खलु ईश्वराधीनमेवेति महात्मगान्धिनः प्रवचनप्रकर्षः।

महात्मगान्धिनः प्रार्थनासभायां ईशोपनिषदः निम्नाङ्कितः प्रथमो मन्त्रः प्रत्यहं पापठ्यते स्म—

ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥

अस्यायमाशयो यन्मया सर्वं खलु भगवते समर्पनीयं, पुनश्च स्वीयावश्यकतानुसारं तदुपयोगः करणीयः। विशेषतया ध्यातव्यमिदं यदस्माभिः परद्रव्येषु किञ्चिन्मात्रमपि लोभो न करणीयः।

अनेन हि परिज्ञायते यत्स्वकीयं सर्वस्वमीश्वरार्पितं कृत्वा तत्प्रदत्तवस्तूना व्यवहारः तत्सेवार्थमेव कर्तव्यः। इदमित्यमत्र महात्मगान्धिनो ह्रीश्वरार्पितभावनाया एव समर्थनं सञ्जायते। ईश्वरार्पिता मानव एवेदृशी घोषणां कर्तुं प्रभुः—

न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम्।
कामये [redacted] सततसनाप्राणिनामार्ति - नाशनम्॥

राष्ट्रपितुः महात्मगान्धिनो राष्ट्रस्वातन्त्र्यपरिप्रेक्ष्ये ध्यातव्येयमीश्वरतत्त्वविवृतिः। [redacted] सततानां प्राणिनां दुःखं शारीरिकं मानसञ्चापि भवेत्। परं स्वमनो-

---

१. मेरा राम, उपरिवत्, पृष्ठम् ४१।

विकार पारतन्त्र्यादुद्भूतमात्मदुःखं शारीरदुःखादपि समधिकं कष्टकरं भवति । ईश्वरस्तु स्वयं दुःखविनाशार्थं नहि समागच्छति, अपि तु स कमपि मानवं निमित्त-रूपेण प्रेषयति प्रेरयति वा । अतो हि भगवत्सकाशात् परपीडाविनाशशक्तिप्रार्थनाया अयमेवाशयो यद् वयं स्वयमेव तन्निमित्तं यतेम । प्रार्थनेयं जातिसम्प्रदायादि-भेदाभेदरहिता सर्वेषां समानरूपेण हितावहा । अस्यां हि सर्वे जना सम्मिलिता भवितुं समर्था । मनुष्यमात्रस्य कृतेयं प्रार्थना । यदेयं प्रार्थनाविधिः साङ्गतां गमिष्यति तदा जगदिदं स्वर्गराज्ये परिणतं भविष्यतीत्यत्र नास्ति सन्देहावसरः ।[1]

महात्मगान्धिन ईश्वरभावना भारतीयोपनिषदिकचिन्तनाधृता वर्तते । ईशोप-निषद प्रथममन्त्रमाश्रित्य तत्कथनमिदं भाष्यमस्ति यत् समग्रमिदं जगदीश्वराच्छा-दितम् ( ईशावास्यमिदं सर्वम् ) । सर्वं खल्विदं ब्रह्म, न हि किञ्चिदपि मामकीनम् । अतो हि मानवैः सर्वं स्वकीयं वस्तुजातं भगवते समर्पितव्यम् । एतद्भावनाया एवानुध्वनिः श्रीमद्भगवद्गीतायामस्ति—

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।'[2]

रामनाममहिमानं वर्णयता महात्मगान्धिना भाव्यते यद्रामनाम स्वात्मसंयमे साहाय्यं प्रकुरुते । अस्मिन्हि एतादृशी शक्तिर्वरीवर्ति या कामवासनामीश्वरदर्शनस्य पवित्रेच्छायां परिणमयति । राष्ट्रपितुर्विचारेण कामवासना तावत्कुण्डलिनीशक्त्या पर्यायात्मिका । या स्वयमेव निरन्तमेयमाना तिष्ठति । यथा मानवः प्रारम्भत एव प्रवृत्त्या सार्द्धं प्रतिद्वन्द्वितामाप्नुवन्नास्ते तथैवानया कुण्डलिन्या सह मानवस्य स्वाभा-विकी प्रतिद्वन्द्विता भवितव्या । अयं च बलात्तामूर्ध्वंगामिन्या मानव ऊर्ध्वरेता च भवेत् । यदा मानव ऊर्ध्वरेता जायते तदा तस्य बाह्याभ्यन्तरं सर्वं जगदीश्वरमयं प्रतिभाति ।[1] ऊर्ध्वरेतस्त्वं तु निर्बलेन मनुष्येण मानवेन लभ्यम् । अत उक्तम्—
'नायमात्मा बलहीनेन लभ्य ।'

अनुक्षणमीश्वरासक्तमनसो महात्मगान्धिन ईश्वरविषयका निम्नाङ्किता गीतानुगीता विचारा अपि महार्घा सन्ति । तेऽत्र समुपस्थाप्यन्ते—

हिंसाया प्रतिरोधक ईश्वर एवास्ति । मानवस्तु तत्प्रतिरोधे निमित्तमात्रम् । वयं हीश्वरस्य सर्वनियमैरनभिज्ञा स्म । यतोहि स्वकीयस्वबुद्ध्यनुसारेण कर्माणि प्रवर्तितव्यम् । ईश्वर निरुद्धस्य यदा निष्फला निष्ठा च स्यात् । निरन्तरप्रयत्नो न कोऽपि निश्चिन्ततामाप्नुयात् । मनुष्याणां मर्यादास्तु । स्वयमेवाह स्वभावस्य

1 मेरा राम, उपरिवत्, पृष्ठ ४७ ।
2 गीता, १८।६६ ।

विनाशको विकासकश्च भवामि। ईश्वर एवास्माकं तमोलोकाज्ज्योतिर्लोकं प्रेरयति। ईश्वरो ह्यपरमाणुपर्वतं सर्वत्र सर्वदा प्रतिष्ठितोऽस्ति। स्वात्मशुद्धयर्थं हृदयाभ्यन्तरे तद्विद्यमानतानुभूतिर्गम्भीरतया प्रकर्त्तव्या। स्वात्मबलप्राप्त्यर्थं एतदतिरिक्तो नान्यः कोऽप्युपाय.। अतोहि स्वात्मशक्त्यै ईश्वरानुभूतमहौषधमिव फलप्रदेति। ये केऽपि ग्रामवासिन स्युरुतनगरवासिनः, सर्वेषामादर्शरचनायामीश्वर एव मध्यबिन्दुर्भवितुमर्हति। साम्प्रतम्, राम एव जनताया जनार्दनरूपेण प्रतिष्ठितः। भारतीयजनताया जीवनस्याधिकतमो भागो विशेषतस्तु रोगशोकादिपीडाघातक्षणे उपायशून्यतावस्थायामीश्वरमेव मध्यबिन्दुरूपं परिकल्प्य स्वां निष्कृतिं निर्वृतिञ्च लभते।[1]

अतोहि भारतीयजीवनस्य कृते ईश्वरसत्तायाः स्वीकृतिरनिवार्या वरीवर्त्ति। किन्तु स्मरणीयमिदं यदीश्वरो हि न कोऽपि व्यक्तिविशेष., स हि जीवच्छक्तिरूपेण सर्वत्र रमते। सर्वं जगत्तस्मिन्नेव समाहितमस्ति, अत एव स ईश्वरो मानवबुद्धि-सीम्नो दूरं दूरतरमिति किं बहुना प्रजल्पितेन।

---

१. मेरा राम, उपरिवत्, पृष्ठम् ५१।

२. विशेषविवरणार्थं 'मेरा राम' ( उपरिवत् ) पुस्तकं द्रष्टव्यम्। एतत्सन्दर्भे गीताया गान्धिकृता अनासक्तियोगव्याख्यापि पर्यवलोकनीया।

# गान्धि-ज्ञानमीमांसा

श्रीदशरथसिंह., एम० ए० ( लब्धस्वर्णपदकः, )

गान्धि-दर्शने ज्ञान-मीमांसाया महत्त्वपूर्णं स्थानं विद्यते । ज्ञान-मीमांसा दर्शन-शास्त्रस्य सा शाखा वर्त्तते यस्या सम्बन्ध ज्ञानविषयकान्वेषणेन सहास्ति । तत्त्ववादिभिरतत्त्ववादिभि , विश्लेषणवादिभिर्वा समग्रवादिभि., सर्वविधै. दार्शनिकैः ज्ञानस्य स्वरूपे, प्रकारे, नाम्नि, साधने, सत्यतायामसत्यतायाञ्च प्रत्यक्षरूपेण परोक्षरूपेण वावश्यमेव विहितो विचारः । गान्धिमहोदय एक समग्रवादी दार्शनिक आसीत् । सोऽपि ज्ञान-विषये स्वविचारं प्रस्तुतवान् ।

गान्धिनो ज्ञान-मीमांसा दार्शनिकाना ज्ञानमीमांसभ्यो भिन्नास्ति । प्रायो-व्यवसायिदार्शनिका. विभिन्नशाखासु दर्शनस्य बौद्धिकस्तरे चिन्तनं कुर्वन्ति । तेषु क्रमशः स्वसिद्धान्तं प्रस्तुवन्ति । गान्धि नैतादृशो व्यवसायी दार्शनिक आसीत् । स दर्शनस्य न कस्यामपि शाखाया वादनिर्माणस्य चेष्टा कृतवान् । अतो ज्ञान-सम्बन्धेऽपि क्रमश. स न कमपि स्वसिद्धान्त प्रस्तुतवान् । स व्यावहारिकदार्शनिकरूपेण केवलं सत्येन सह प्रयोग कृतवान् । एतस्यैव प्रयोगस्य परिणामस्वरूपः प्रकाश. ज्ञानस्य विभिन्नशाखासु समागत , तस्य ज्ञानमीमांसाया अप्येष एवेतिहासोऽस्ति । ज्ञानस्य स्वरूपे, सीम्नि, साधने प्रकारे च स पृथक्-पृथक् गम्भीरतया विचारं न कृतवान् । परन्तु दैनिकजीवने संभवसमस्याना समाधानान्वेषणे तथा जनैः दृष्टाणा प्रश्नानामुत्तरदाने ज्ञानस्य वास्तविकस्वरूपे, सीम्नि प्रकारे च पूर्णः प्रकाश आपतितोऽस्ति । अतो गान्धि-ज्ञानमीमांसाया विचार-प्रसंगेऽस्माकमवधानं परममनिवार्यं विद्यते ।

द्वितीय वस्तवधेयमेतदस्ति यत् गान्धिनो ज्ञानविषयको विचार. तस्य तत्त्वविषयकविचारेष्वाधृतोऽस्ति । अतोऽस्य ज्ञानसिद्धान्त परमतत्त्व-स्वरूपसन्दर्भे एव बोद्धव्योऽस्ति ।

उपनिषत्सु कथितमस्ति यत्—"ऋतेज्ञानान्न मुक्तिः" । अन्येऽपिभारतीयाः दार्शनिका इमं सिद्धात सत्य मन्वते । गान्धिमहोदयोऽपि सत्यज्ञानाभावे मुक्तिं संभवा न मनुते । प्राचीनयवनदेशीयदार्शनिकसुकरातसदृशः सोऽपि ज्ञानमेव

सद्गुण स्वीकृतवान् । तस्यै पदृढो विश्वासोऽस्ति यत् सत्यज्ञानाभावे नोचित कार्यं भवितु शक्नोति । उचितकार्यं सत्यचिन्तनस्यैवाभिव्यक्तिर्विद्यते । स उक्तवान्— "A man is but the product of his thought, what he Thinks he becomes" ? अतोनैतिकजीवनकृतेऽनिवार्य उचितज्ञानस्यसद्भावोऽस्ति ।

इदानी प्रश्न समुत्थितो भवति यत् यथार्थज्ञान किमस्ति ? गान्धिदृष्टयाध्यात्मिकज्ञानमेव यथार्थज्ञानमस्ति ।

एतादृशेनैव ज्ञानेन व्यक्ति समाजश्च मुक्तिप्राप्तौ सफलौ भवत । तदनुसार मानव अज्ञानकारणे न बद्धोभवति । अज्ञानेनैव सोऽनैतिककार्याणि कुरुते तथा सर्वविधदु खै पीडितो जायते ।[२] अज्ञानकारणादेव स आत्मान सत्यस्यश्वरस्य वाश न मत्वा क्षणभङ्गुर शरीर मनुते । शरीरस्वीकृत्या तस्मिन्नैहिकसुखस्य लालसा जागर्ति तथैतेन तस्य जीवन सकीर्ण जायते । स निजस्वार्थलोक एव रतो निवसति तथा सामाजिकजनाना प्रेम्णा वञ्चितो भवति । स प्रेम शिक्षते एव न । परन्तु प्रेम विना न व्यक्ते कल्याण भवितु शक्नोति नवा समाजस्यैव । गान्धिहोदयोऽनुभूतवान् यत् प्रेमश्रेष्ठमेव व्यापक विधाय व्यक्तिसमाजौ स्ववास्तविकस्वरूप प्राप्स्यत ।

प्रेम्ण उत्पत्तिरकस्मात् मानवमनसि न जायते । एतस्य विकास आध्यात्मिकज्ञानस्य विकासेन भवति, यद्धि यथार्थज्ञानमस्ति । एतेनैतत् स्पष्टमस्ति यत् मानवस्य चरमलक्ष्यप्राप्तौ यथार्थज्ञानस्य प्रमुख स्थानमस्ति ।

यथार्थज्ञानसम्बन्धे गान्धिनो दृष्टिकोणो व्यापकोऽस्ति । केचन पाश्चात्यविचारका यथार्थज्ञानमन्यज्ञानात पूर्णत पृथक् विधाय शोचन्ति । पाश्चात्या अनुभववादिन इन्द्रियानुभवप्राप्तप्रत्ययै निर्मिताण्येव वाक्यानि यथार्थज्ञानसीम्नि स्थापितवन्त । एतद्विपरीत बुद्धिवादिन बौद्धिकप्रत्ययै निर्मितान्येव वाक्यानि यथार्थज्ञानरूपेण स्वीकृतवन्त । 'कान्ट'-सदृश समीक्षावादी ज्ञानमस्नाभाविकरूपेण बुद्धिप्रत्ययानामनुभवप्रसूतसामग्रीणाञ्च समन्वयममन्यत । विश्लेषणवादिनो यथार्थज्ञान सार्थकवाक्यपर्यन्तमेव सीमित रक्षितवन्त । यत् मश्लेषणात्मकविश्लेषणात्मकवाक्य यावदेव सीमितमस्ति ।[३]

रहस्यवादिन रहस्यात्मकानुभूतौ प्राप्त ज्ञानमेव वास्तविक ज्ञानममन्यन्त ।[४]

---

1 Selection from Gandhi, N K Bose P 21

२ गाधीजीने १९३४के भूकम्पको मनुष्यके द्वारा हुआछूतके रूपम किये गये पापका परिणाम माना था ।

३ Language Truth and loic, Ayer

४ Bradley, Bergson, इत्यादि विचारकने रहस्यात्मक अनुभूतिसे प्राप्त ज्ञानको ही वास्तविक माना है ।

द्वितीयरूपेणैवं वक्तुं शक्यते—यदनुभववादिनः भौतिकविज्ञानं बुद्धिवादिनः गणित तर्कशास्त्रञ्च समीक्षावादिन. मध्यममार्गं तथा रहस्यवादिनोऽलौकिकज्ञानं वास्तविकमादर्शं मन्वते ।

गान्धिनोदृष्टिकोण उपर्युक्तसमस्तविचारापेक्षया व्यापकोऽस्ति । एतद्दृष्ट्या चरमतत्त्वं सत्य वर्त्तते, शाश्वतमस्ति । एतस्य शाश्वतसत्यस्यानेके पक्षा. सन्ति । तेषामपि स्वेषु पर्याप्त महत्त्वं विद्यते । सत्यस्य समग्रपक्षाणा ज्ञानाय कस्यापि विशेषप्रकारस्य साधनस्याग्रहो नापेक्ष्यते । अतः शाश्वतसत्यमिन्द्रियानुभवसीमाया बद्ध्वा संरक्षणमसम्भव विद्यते । न तद्बुद्धि-तर्कयो संकीर्णश्रृङ्खलासु संयमनीयं भविष्यति । तत्केवलंसार्थकवाक्याना पिहितप्रकोष्ठे एव रक्षितुं शक्यते । तदलौकिकानुभूतिम्य पृथक् रहस्यात्मकानुभवस्य शून्ये विलीनं कर्त्तुं न शक्यते । सत्यस्य विभिन्नपक्षाणा ज्ञान विभिन्नसाधनैरेव कर्त्तुं शक्यते । पार्थिववस्तूना ज्ञानमिन्द्रियानुभवेन, दूरस्थवस्तूना ज्ञान बुद्ध्या तथा विवेकेन, परमसूक्ष्मवस्तूना ज्ञानमन्तरनुभूत्या तथा कियता वार्त्ताना ज्ञानमाप्तवाक्यै संभवमस्ति ।

सत्यप्येतस्मिन् नैतरकथयितुं शक्यते यत् सम्पूर्णसत्यस्य ज्ञानमस्मभ्यं पार्थिवेनानेन शरीरेण भवितु शक्यते । सम्पूर्णसत्यसम्बन्धेऽस्मभ्यं श्रद्धा-विश्वासयो. साहाय्यं प्राप्तव्यं भवति ।[1]

स उक्तवान्—

It is imposible us to *realize* perfect truth so long as we are imprisoned in this mortal frame. We can only Visualize it in our imaginatian. We can not through the instrumentality of this ephemeral body. See base to base Truth which is eternal. That is why in the lost resort we must depend an faith.

सत्यस्याभिव्यक्तिरसीमातोगान्धिदृष्टया ज्ञानमप्यनन्तं विद्यते । अतो ज्ञानं सीमितं कर्त्तुं न शक्यते । तदनुसारं दैनिकानुभवेन यदस्माभिर्ज्ञानं प्राप्यते, तेनास्माकमात्मज्ञानेर्ज्ञानस्य विस्तारो जायते । एतादृश्येव प्रक्रियाग्रेऽपि कार्यशीला तिष्ठति । नवाभिर्नवाभिरनुभूतिभिराध्यात्मिकज्ञाने वृद्धिर्जायते । तयास्मासु नवनवाना कर्त्तव्यानामुदयो भवति । परन्त्वेतेन सत्ये किमपि परिवर्त्तनं न जायते । सत्य सदा एकसदृशमेव तिष्ठति । स उक्तवान्—

१. सर्वदा मन्दिर, पेज. ( १ ) Selections from Gandhi N. K. Bose P. 8

Knowledge is limitless and So also the application is truth every day we add to our Knowledge of the Power of the Atman and we shall keep on doing ever the same New experience will Teach us New duties But Truth shall ever be the same."[1]

एवं प्रकारेणैतादृशं प्रतीयते यत् सर्वेऽनुभवाअस्मानन्ततो गत्वात्मज्ञानाश्रयोन्मुखमेव नयन्ति । अत सर्वप्रकाराणि ज्ञानान्यात्मानुभवस्यैव साधकानि सन्ति । येन प्रकारेण सर्वेषा चिद्विन्दुना क्रिया ईश्वरलक्ष्यस्य साधिका मता सन्ति, तेनैव प्रकारेण गान्धी सर्वप्रकाराणि ज्ञानान्यात्मज्ञानस्य साधकानि स्वीकृतवान् ।

गान्ध्यनुसार किमपि ज्ञान पूर्णं नास्ति । यतोऽद्ययावत् यत्किमपि ज्ञानमस्माभिर्वैज्ञानिकमाध्यात्मिक वावाप्तं तत्सर्वं सम्पूर्णज्ञानस्य परमसूक्ष्माशोऽस्ति । अत स उक्तवान्—

"*We do not know all the lows of God nor their working.* Knowledge of the tallest Scientist or the greatest spritulist is like a particle of dust.[2]"

अत्र सर्वाधिक महत्त्वपूर्णं वृत्तमवधेयमिदमस्ति यत् गान्धी ज्ञानमाध्यात्मिकमपि पूर्णं नामन्यत । अद्वैतवेदान्तवादिभिराध्यात्मिकज्ञान पूर्णं स्वीकृतम् । पर गान्धिमतेनास्मिन् दैनिक विकासो भवति । पूर्णाध्यात्मप्राप्तिरसम्भवा विद्यते । सन्तविनोवाभावे महोदयोऽपि तथ्यमेतत् स्वीकृतवान् । स उक्तवान् यत् येन प्रकारेण विज्ञाने नव-नवनियमानामनुसन्धान भवति, तथैवाध्यात्मज्ञानेऽपि नव-नवबोधस्यावश्यक्तास्ति ।[3]

यत सम्पूर्णज्ञाने विजयप्राप्तिरसम्भवास्ति, अत सर्वप्रकारेभ्य प्रमादेभ्योऽपि मुक्तिलाभो मानवकृतेऽसम्भवोऽस्ति । सर्वप्रकारेभ्योऽपराधेभ्योमुक्तिलाभोऽपीश्वर कृपयैव सम्भाव्यते । एव प्रकारेण गान्ध्यनुसार ज्ञानमेव सद्गुणो विद्यते । 'आध्या-

---

१. यग इण्डिया, ८-४'२६ पेज १३१ Selection from Gandhi N. K. Bose P 13

२. Harijan, 16

३. हरिजन, 16-2 1934 P 4 ( 3 ) Science and self Knowledge P. 22

रिमवज्ञानमेव श्रेष्ठनमज्ञानमस्ति। ज्ञानमनन्तमस्ति तथा प्रमादेभ्यो मुक्तिरीश्वर-कृपयैव भवितु शक्यते।

गान्धिनो ज्ञान-मीमांसायामाप्तवाक्यस्य, बुद्धेरन्तर्बोधस्य च विवरणमायात-मस्ति। अत एषु प्रत्येकमवलम्ब्य विचार क्रियते।

आप्तवचनम्

गान्धीअन्यभारतीयदार्शनिकसदृशमेव शब्दप्रमाण ज्ञानस्य साधन स्वीकृतवान्। परन्तु तदनुसारमाप्तवचन स्वस्मिन् पूर्ण नास्ति। साधारणतया जना धर्मग्रन्थाना प्रामाणिकजनाना च वचनानि विनातर्क विवेक चोदघृतानि कुर्वते। गान्धी महोदय एतस्य विरोध कृतवान्। स उक्तवान् यत् सर्वप्रकाराण्याप्तवचनानि बुद्धिविवेकाभ्या परीक्ष्याणि भवेयु। अत आप्तवचन तावदेव सत्यमस्ति यावत् तदबुद्ध्यनुकूल स्यात्। ऋते तर्कविवेकाभ्यामेतत्स्वीकृति उर्वरमस्तिष्कस्य लक्षणमस्ति।[१]

आप्तवचनस्योपयोग प्रत्येकावस्थाया कर्त्तव्योऽपि नास्ति। यत्र बुद्धे प्रवेश सरलतया सभवेत्, तत्रोत्तमोत्तमस्याप्याप्तवचनस्यावश्यकता न भवति।

स कथितवान् यत् कोऽपि धर्मग्रन्थ यदि सौम्यबुद्धेरेवमात्मन आदेशस्य विरुद्धोऽस्ति, तदासौ सरलतया त्यक्तु शक्यते। स उक्तवान्—

"I would regreat all exсriptural othority if is in conflict with sober reason or the dictates of the heart"[२]

परमेतस्यैतत तात्पर्यं,नास्ति यदाप्तवचनात किमपि ज्ञान प्राप्यते) यत्र बुद्धे प्रवेशो न भवितुमर्हति तत्राप्तवचनस्य, श्रद्धाविश्वासयोश्च साहाय्य ग्राह्य भवति। यथेश्वर सम्बन्धे ज्ञान नन्द्रियानुभवै जायते न वा बुद्धिसाहाय्येन। एतत्कृते तु वय शास्त्राणामेव प्रामाणिकव्यक्तीनामनुभूतेरेवाश्रिता भवाम। अत ईश्वरीय ज्ञान विश्वाससहायेनैव भवितु शक्नोति।

प्रश्न एष उत्थितो भवति यदाप्तवचन विना तर्क कथ न ग्राह्यो भवेत्? किं शास्त्राणि नेश्वरवचनानि सन्ति। यदि तानीश्वरवचनानि तदा का तर्क-स्यावश्यकता? गान्धी मनुत यत शास्त्रवचनमीश्वरप्रेरितमस्ति परमेतस्मिन् सत्यपि स नैत मनुत यत् शास्त्र साक्षात्रूपेणेश्वरकृतमस्ति। तदनुसार शास्त्ररचना धर्म-प्रवर्त्तकैरीश्वरदूतै वा क्रियते। तदनन्तर तदुपरि विभिन्नटिप्पणय क्रियन्ते। एत-

---

१ यग इडिया, ६-१९'२६, पेज ३४७

२ यग इडिया, ७-१०-१९२६ पेज ३४७

प्रक्रियानन्तरं तज्ज्ञानमस्माभि प्राप्यते। अत एतादृशं ज्ञानं साक्षात्रूपेणेश्वरप्रदत्तं न वक्तुं शक्यते। एतादृशे ज्ञाने प्रमादशङ्का भवति। अत प्रत्येकधर्मग्रन्थस्य वार्त्तासु जन निर्णयाधिकार गृह्णीयात्।[1]

गान्ध्यनुसारं शास्त्रं बुद्धे पूरकमस्ति। अतो यत्र तत् बुद्धेरतिक्रमण कुर्यात्तदा तस्या परिस्थित्या तस्य परित्यागो विधेय। योगवाशिष्टस्य न्यायप्रकरणेऽपि कथितमेव। गान्धी तत्र प्रेरणा गृहीतवान्।[2]

> अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम्,
> अन्यत्त्वार्षमपि त्याज्यं मान्यं मायैकसेविनाम्।
> युक्तियुक्तमुपादेयं वचनं बालकादपि,
> अन्यत्तृणमिव त्याज्य म्युक्त पद्मजन्मना।

अर्थात् मानवनिर्मित शास्त्र तदैव स्वीकार्यं यदा तद् विवेकानुकूलं स्यात्। यदा तद् विवेकानुकूलं नास्ति, तदा तद् बहिष्कार्यं स्यात्। यथापि तदीश्वरप्रेरणया स्वत्वप्रतिपादनं करोति। सदैवास्माभिरौचित्यभावनया परिचालितै भाव्यम्। यदि बालकोक्तय एव युक्तिपूर्णा स्यु तदा ता अपि ग्राह्या भवेयु। यदि किमपि ब्रह्मणेरितमपि वाक्य भवेत्, परतन् विवेकपूर्णं न स्यात्, तदा तत्सर्वथा त्याज्य भवेत्।

गान्धी स्वानुभवेनैतदुक्तवान् यत् तत्र बुद्धे प्रवेश सरलतया स्यात्, तत्र कस्यापि प्रमाणिकजनस्योक्तेरुद्धरण हानिकरममत च वर्तते।[3]

कारण स्पष्टमस्ति यत् यदा वय कस्यापि प्रामाणिकजनस्य कथनमनुमानस्या धारविना मन्यामहे, तदा तत् अनुकूलप्रतिकूलयोरुभयोरपि पक्षयोरुद्धृत कर्तुं शक्नुम। अर्थात् व्यक्ति स्वपूर्वधारणानुकूल तस्मान्निष्कर्ष निष्कासयितु शक्नोति। अत: एतादृशे ज्ञाने सत्यस्यान्वेषण न जायते। अतएव गान्धी महापुरुषाणामुक्त्याधारे निगमन-प्रक्रियामप्यवाप्तुक्तवान्।

एवमेतत् स्पष्टमस्ति यत् यद्यपि गान्धी शास्त्र प्रमाण स्वीकृतवान्, परन्त्वेतस्य सीमामप्यङ्गीकृतवान्। बुद्धेरात्मविश्वासस्य च विरोधिन शास्त्रवचनस्य तस्य ज्ञानमीमांसाया न किमपि स्थानमस्ति।

---

१. हरिजन ५-१२-१९३६ पेज ४
२. In search of the supreme, Kheyo P 108,
३ Young India 8-12-128 P 75 & bid, p 316

उपरि वयं गान्धिनः शब्दप्रमाण-सम्बन्धे एतद्दृष्टवन्तो यत् तदीया सत्यता तदैव तिष्ठति, यदा सा बुद्धेरनुकूला भवति। परमेतस्य तात्पर्यमेतत् कदापि नास्ति, यद्बुद्धिरेव ज्ञान-प्राप्तेः श्रेष्ठतमं साधनमस्ति। यथा शब्दज्ञानस्यात्मीया मर्यादा विद्यते, तथैव बुद्धेरपि स्वीया सीमास्ति। गान्धी महोदय एतत्स्वीकृतवान्। बुद्धेः सीमोपरि विचारात्पूर्वं बुद्धेः स्वरूपस्य तथा तस्याः भावनया सह सम्बन्धस्य ज्ञानमनिवार्यमस्ति।

बुद्धिः गान्ध्यनुसारमस्माकं मस्तिष्केन सम्बद्धा वर्तते तथा भावनायाः सम्बन्धोऽस्माकं हृदयेन सहास्ति।[1] तथापि बुद्धिभावनयोः परस्परमान्तर्विरोधो नास्ति। वस्तुतः सततं विवेकपूर्णं जीवनयापने कोऽपि विचारः भावनायाः विश्वासस्य वा रूपं दधाति।[1] यदि कस्मिन्नपि विश्वासे बुद्धितत्त्वं विद्यमानं न भवेत् तदा तादृशो विश्वासोऽन्धविश्वास एव उच्यते। अन्धविश्वासस्य च जीवने किमपि महत्त्वं नास्ति। स विश्वासरूपं कदापि न गृह्णाति।[3]

अतएवैतदुक्त्याधारे एवैतदपि कथयितुं शक्यते यत् बुद्धिहीना भावना वासनातिरिक्तमपरं किमपि नास्ति। अतो बुद्धि-भावनयोर्मध्ये गम्भीरः सम्बन्धो विद्यते। विनोबामहोदयः स्पष्टरूपेण एतदुक्तवान् यत् भावना बुद्धेरेव परिणामोऽस्ति। यदा बुद्धिः परिपक्वा भवति, सा परिनिष्ठिता भवति। तदैतादृशी बुद्धिरेव भावना कथ्यते।[1] एवं प्रकारेणैतत् स्पष्टमस्ति यत् बुद्धिभावनयोः कोऽप्यन्तर्विरोधो नास्ति। तथापि द्वयोरैक्यं न मन्यते। एतद्भेदं हृदये निधायैदानीं बुद्धि-सीमा-परिज्ञानं विधेयम्।

गान्ध्यनुसारं बुद्धिः ज्ञानप्राप्तेः साधनमवश्यमस्ति परमेतन्मर्यादा वर्तते यदा बुद्धिः स्वसीमातिक्रमणं करोति, तदा सा भयङ्करी राक्षसी जायते। अतो बुद्ध्या सत्यस्य सर्वेऽङ्गाः न ज्ञातुं शक्यन्ते। अतो बुद्धेः सर्वशक्तिमत्ता न स्वीक्रियते।

इदानीमेष प्रश्नो जायते यद् बुद्धिः स्वसीमायाः अतिक्रमणं कदा करोति? यदा बुद्धिः नैतिककार्याणां सम्पादने बाधां समुपस्थापयति, तदा सा स्वसीमायाः अतिक्रमणं करोति। अधिकाधिकाः बुद्धिवादिनः प्रत्येककार्यारम्भात् पूर्वं तर्कं न कुर्वन्ति, ते भावनया कार्यं विदधति। अतो महत्त्वपूर्णकार्याणां सम्पादनकृते भावनाया

१ I bid 11/10 '28 P 340

२ I bid 14, 4. 1927 P. 120

3 I bid 14 4 1927 P. 20

एवावश्यकता भवति। बुद्धि सदा सन्मार्गमानेतुमिच्छति। परमनया कार्यं न सम्पाद्यते। कार्यसम्पादनार्थं भावनाया विश्वासस्य सकल्पस्य चापेक्षा भवति। इदानी गान्ध्यनुसार जीवन कर्तव्यानुसार कार्यानुसार वा किमपि नास्ति। अतो यदा कस्यापि कार्यस्य सम्पन्नताया बुद्धि बाधिका भवति, तदा तत्रैषा सीमातिक्रमण करोति। अतोबुद्धि सदा निर्देशिकास्वरूपैव ग्राह्या भवेत्। तया हृदयकार्याणामतिक्रमण न विधेयम्।

बुद्धिद्वारेण सत्यस्य बाह्यरूपमेव ज्ञायते। अनया वय मनुष्यस्यान्त स्यामनुभूति न ज्ञातु शक्नुम। अन्त स्यानुभूतीना प्राप्त्यर्थं मस्तिष्कधरातलमपहाय हृदयधरातलस्य प्राप्तिरपेक्षिता भविष्यति। असह्यपीडास्वनुभूतास्वेवात्मगह्वरे गन्तु शक्यते। अत स्पष्टमस्ति यद् बुद्धिरन्त करणे प्रवेष्टुनार्हति। परन्तु महत्त्वपूर्णकार्यकृतेऽस्माभि तत्रापि प्रवेशो वाञ्छनीयो भवति।

गाधिमहोदय एतदुक्तवान यत बुद्धि रहस्यात्मकज्ञाने ज्ञानमस्मभ्य दातु समर्था न भवति। एतत्तात्पर्यं नैतदस्ति यद्रहस्यात्मकमबौद्धिकमस्ति। अत एतादृशे ज्ञानेऽबौद्धिके स्वीकृते न तद्विकृत कल्प्यते। एतादृशस्य ज्ञानस्य यथार्थता महापुरुषाणामनुभूतिभिस्तथा तेषा परिवर्तितव्यक्तित्वनैव ज्ञायते। अत एतत् स्पष्टमस्ति यत् सर्वप्रकाराणि ज्ञानानि बुद्धेर्मापदण्डेनैव न मीयन्ते। किञ्चिदेतादृश ज्ञानमस्ति, यदस्माभिरन्तर्ध्वनिभि प्राप्यते। यस्मै गान्धिना तरात्मन सज्ञा प्रदत्ता। अतोऽस्य ज्ञानस्य सम्बन्धेऽपि तस्य विचारा ज्ञेया स्यु।

## अन्तरनुभूति

गान्धी स्वजीवनकालेऽनेकधा स्वान्तरात्मानुसार महत्त्वपूर्णं निर्णय कृतवान्। अत एतादृशज्ञानस्य तस्य ज्ञानमीमासाया पर महत्त्वपूर्णं स्थानमस्ति। एतादृश ज्ञान दार्शनिकभाषायाम तरनुभूतिशब्देना तर्बोधशब्देन वा व्यवह्रियते।

अन्तरात्मनो ध्वनिविषये गान्धी कथितवान् यत एषोऽस्माक मध्ये प्रभोरीश्वरस्य ध्वनिरस्ति। अस्माकमन्तश्शक्तिरेतादृशी विद्यते या यदा कदा स्ववेदनाप्रकाशाय प्रेरयति। एषा शक्ति कदापि न वञ्चना करोति। इय कदाचित् ससारस्य समस्तप्रियजनाना निर्णयाना विरोधे वचनाय कथयति। अस्या सम्बन्धोऽस्माक हृदयस्य विशेषभागेन भवति। इय शक्तिरस्मान् महाकार्येभ्य सदा प्रेरयति।

एतस्या शक्त्या प्राप्ति सततप्रयत्नेन भवति। केवलमिच्छया नैषा नीयते। बालकेषु, पशुषु मूर्खेषु च नैषोत्पद्यते। एना प्राप्तु कठिनानुशासनस्यावश्यकता भवति।

अन्तर्ध्वनि व्यक्तिसमाजयो भेदरूपेऽपि नो मन्यते। योध्वनि व्यक्तिकृते सत्योऽस्ति स एव समाजकृतेऽपि तथास्ति। अतो वैयक्तिक-सामूहिकात्मनोर्भेदगणना नोचिता विद्यते।

येनैषा शक्तिरुपलब्धा, स जन कातरो भवति। यत स आत्मानं कदाप्यन्येभ्य श्रेष्ठ न मनुते। तस्मिन् पूर्णा विनम्रता तथान्यवाक्श्रवणाय तत्परता भवति। स सदा स्वापराधश्रवणाय सज्जो भवति।

प्रायो वैज्ञानिका एतादृश ध्वनिमात्मसमूचनसंज्ञया समलङ्कुर्वन्ति। तथाहि तं यथार्थज्ञानकोटौ न गृह्णन्ति। पर गान्धी त विशेषार्थे—आत्मसमूचन स्वीकृतवान्। एतदात्मसमूचनमस्ति, यतोऽस्माकमन्त करणेष्वीश्वरध्वनिरस्ति। एष ध्वनि न दैत्यध्वनि वदयते, यथाहि वैज्ञानिका मन्यन्ते। इम ध्वनि प्रत्येकजन श्रोतुं शक्नोति यदा स एतदर्थं निर्धारितनियमान् पालयति।

अन्तरनुभूतेरुल्लिखितविवरणेनैतत्स्पष्टमस्ति यत्सर्वविषज्ञानेष्वस्य महत्त्वपूर्णं स्थानमस्ति। अन्यैरप्यध्यात्मवादिभि दार्शनिकैरेतज्ज्ञान सर्वोत्तमं स्वीकृतम्। यस्य ज्ञान वय बुद्धया न प्राप्नुम, तस्य ज्ञानमन्तरनुभूत्या सरलतया जायते। गान्धिनैतादृशमपि ज्ञान नाबौद्धिक कथितम्। अतोऽस्य ज्ञानस्य बुद्धया सह न कोऽपि विरोधो विद्यते। डा० राधाकृष्णनोऽपि बुद्ध्यन्तरनुभूत्योर्मध्ये विरोध न स्वीकृतवान्। स कथितवान् यदेषानुभूति बौद्धिकज्ञानानुशासनेनैव लभ्यते। गान्धिनेऽप्येतन्मान्यमस्ति। गान्धिन एतज्ज्ञानस्य विशेषतैषास्ति यदेतस्य ज्ञानस्योपयोग केवलमात्मज्ञाने ब्रह्मज्ञाने वा न भविष्यति। प्रत्युतास्योपयोग दैनिकसमस्याना समाधानेऽपि भविष्यति। यदि गान्धिन ज्ञानसम्बन्धि विचारस्य समीक्षा क्रियेत तदैतत्, स्पष्टरूपेण प्रतीयते यत्तस्य ज्ञानसम्बन्धिविचारा केवलबौद्धिकव्यायामार्थमेव न सन्ति, प्रत्युत जीवनस्य निपुणतायै। स एतदुक्तवानपि—"तद्दर्शन यस्य सम्बन्ध जीवनेन सह नास्ति, मृतशरीरसदृश विद्यते"[1] सम्प्रति विशेषत आमेरिका दार्शनिका ज्ञानसम्बन्धे मार्गान्वेषणे तथा सिद्धान्तस्थापने व्यस्ता भवन्ति। तेषा विचारेषु शास्त्रीयता, सूक्ष्मता तथा स्पष्टतावश्यमेव प्राप्यन्ते पर तेषा सम्बन्ध सम्पूर्णजीवनस्य विकासेन सह नास्ति। तेषा स्थिति केवलमस्माक मस्तिष्कधरातल एव भवति। चरित्रे तस्य प्रभावो न लक्ष्यते। परमेषा गान्धिन एव विशेषता विद्यते यत् ज्ञान-मीमांसायामपि सम्पूर्णजीवनस्य सफलता वाञ्छिता।

---

1 young India, 14-4-1927 P 120

गान्धिनो ज्ञानमीमांसा जैनदार्शनिकानां स्याद्वादस्यानेकान्तवादस्य च परं समीपेऽस्ति। अतएतेषां विचारेषु विवादस्यालोचनायाश्च न किमपि स्थानं वर्त्तते। एतेषां ज्ञानसम्बन्धिविचारेषूपयोगिताया सर्वथा सद्भावो वर्त्तते।

एतेषां विचारस्यैका द्वितीया विशेषतेयमप्यस्ति यत् सर्वाणि ज्ञानान्यध्यात्मवादेन सह सबद्धानि सन्ति। अतस्तैरस्मभ्यं चरमलक्ष्यप्राप्तौ सहायता लभ्यते अत किमपि ज्ञान नानुपयोगि विद्यते।

गान्धी ज्ञानं शक्तिस्वरूप ज्ञातवान्। सर्वा शक्तयोऽन्त आध्यात्मिकशक्तावेव परिणता, जायन्ते। अत सर्वविधानि ज्ञानान्यन्तत आध्यात्मिक ज्ञान एव परिणतानि भवन्ति। परमेतेन व्यावहारिकजीवनस्याल्पापि क्षतिर्न जायते।



अन्तर्ध्वनि व्यक्तिसमाजयो भेदरूपेऽपि नो मन्यते। योध्वनि. व्यक्तिकृते सत्यो ऽस्ति स एव समाजकृतेऽपि तथास्ति। अतो वैयक्तिक-सामूहिकात्मनोर्भेदगणना नोचिता विद्यते।

येनैषा शक्तिरुपलब्धा, स जन कातरो भवति। यत स आत्मान कदाप्यन्येभ्य श्रेष्ठ न मनुते। तस्मिन् पूर्णा विनम्रता तथान्यवाक्श्रवणाय तत्परता भवति। स सदा स्वापराधश्रवणाय सज्जो भवति।

प्रायो वैज्ञानिका एत.दृश ध्वनिमात्मससूचनसज्ञया समलङ्कुर्वन्ति। तथाहि स यथार्थज्ञानकोटौ न गृह्णन्ति। पर गान्धी त विशेषार्थे—आत्मससूचन स्वीकृतवान्। एतदात्मससूचनमस्ति, यतोऽस्माकमन्त करणेष्वीश्वरध्वनिरस्ति। एषध्वनि न दैत्यध्वनि वक्ष्यते, यथाहि वैज्ञानिका मन्यन्ते। इम ध्वनि प्रत्येकजन श्रोतु शक्नोति यदा स एतदर्थं निर्धारितनियमान् पालयति।

अन्तरनुभूतेरुल्लिखितविवरणेनैतत्स्पष्टमस्ति यत्सर्वविधज्ञानेष्वस्य महत्त्वपूर्णं स्थानमस्ति। अन्यैरप्यध्यात्मवादिभि दार्शनिकैरेतज्ज्ञान सर्वोत्तमं स्वीकृतम्। यस्य ज्ञान वय बुद्धया न प्राप्नुम, तस्य ज्ञानमन्तरनुभूत्या सरलतया जायते। गान्धिनैतादृशमपि ज्ञान नाबौद्धिक कथितम्। अतोऽस्य ज्ञानस्य बुद्धया सह न कोऽपि विरोधो विद्यते। डा० राधाकृष्णनोऽपि बुद्ध्यन्तरनुभूत्योर्मध्ये विरोध न स्वीकृतवान्। स कथितवान् यदेषानुभूति बौद्धिकज्ञानानुशासनेनैव लभ्यते। गान्धिनेऽप्येतन्मान्यमस्ति। गान्धिन एतज्ज्ञानस्य विशेषतैषास्ति यदेतस्य ज्ञानस्योपयोग केवलमात्मज्ञाने ब्रह्मज्ञाने वा न भविष्यति। प्रत्युतास्योपयोग दैनिकसमस्याना समाधानेऽपि भविष्यति। यदि गान्धिन ज्ञानसम्बन्धि-विचारस्य समीक्षा क्रियेत तदैतत्, स्पष्टरूपेण प्रतीयते यत्तस्य ज्ञानसम्बन्धिविचारा केवलबौद्धिकव्यायामार्थमेव न सन्ति, प्रत्युत जीवनस्य निपुणनार्थं। स एतदुक्तवानपि—"तद्दर्शन यस्य सम्बन्ध जीवनेन सह नास्ति, मृतशरीरसदृश विद्यते"[1] सम्प्रति विशेषत आमेरिका दार्शनिका ज्ञानसम्बन्धे मार्गान्वेषणे तथा सिद्धान्तस्थापने व्यस्ता भवन्ति। तेषां विचारेषु शास्त्रीयता, सूक्ष्मता तथा स्पष्टतावश्यमेव प्राप्यन्ते पर तेषा सम्बन्ध सम्पूर्णजीवनस्य विकासेन सह नास्ति। तेषा स्थिति केवलमस्माक मस्तिष्कधरातल एव भवति। चारित्रे तस्य प्रभावो न दृश्यते। परमेषा गान्धिन एव विशेषता विद्यते यत् ज्ञान-मीमासायामपि सम्पूर्णजीवनस्य सफलता वाञ्छिता।

---

1. young India, 14-4-1927 P 120

तथाऽसत्यवादिनं सत्येन जयति।' ब्रह्मदत्तस्य गुणान् श्रुत्वा मल्लिकस्य सूतः ब्रह्मदत्तं प्रशस्य स्वकीयं रथं पश्चात् कृतवान्। तथैव महात्माऽपि दुर्जनान् सुजनतया दुर्गुणान् च गुणैर्जेतुं यतते स्म। अनया नीत्या तस्य विजयः न केवलं विपक्षाणां शरीरेषु अपितु हृदयेषु अभवत्।

अहिंसापरोपकारविषये गान्धिनो दर्शनम्—सामान्यतः जनानामियं धारणा विद्यते यदुपकारकर्त्ताऽन्येषां जनानां हितं सम्पादयति। अहिंसकोऽपि परपीडानिवारको भवति। परन्तु महात्मनः सिद्धान्तः नितरां भिन्न एवासीत्। महात्मा गान्धी मनुते स्म यत् परोपकारकर्ता परस्य हितं सम्पादयति किं तु प्रथमं स्वस्य हितं करोति। यदि स्वकीये शरीरे कस्मिन्नपि अवयवे पीडा भवति तर्हि आत्मप्रदेशसम्बन्धात् सर्वमेवाङ्गं पीडायुक्तं भवति, ततः सर्वत्र पीडां दूरीकर्तुं यतते। यस्यात्मा महान् भवति तस्य प्रेम व्यापकं भवति। यदि स्वसमक्षं कोऽपि प्राणी दुःखी भवति तर्हि तस्य दुःखं स्वात्मनि सङ्क्रामति। यथा पुत्रस्य पीडां दृष्ट्वा माता व्यथिता भवति, पुत्रस्य व्यथा यदा दूरीभवति तदा मातुर्वेदनाऽपि दूरीभवति। यः स्वहृदये सङ्क्रान्तस्य परस्य दुःखस्य दूरीकरणाय यतते, स प्रकारान्तरेण स्वहृदयस्य दुःखं दूरीकर्तुमेव यतते। अहिंसकः परस्य वेदनां दृष्ट्वा विकलः व्यथितश्च भवति, स्वस्य व्यथां दूरीकर्तुमेव परस्य वेदनां दूरीकरोति। यदा परस्य वेदना दूरीभवति तदा अहिंसकस्य हृदये शान्तिर्भवति। गान्धिनो जीवनस्य बहूनि उदाहरणानि विषयेऽस्मिन् सन्ति। एका कथा विद्यते यत् एकस्य पुत्रस्य विषये द्वयोः मात्रोः कलहः आसीत्। ते पुत्रं स्व स्व प्रति कर्षतः, यदा कर्षणेन पुत्रः दुःखी आसीत् तदा तस्य पुत्रस्य यथार्था जननी पुत्रस्य दुःखेन दुःखिनी भूत्वा पुत्रं त्यजति, कथयति च इमं पुत्रं त्वमेव पालय, यतः पुत्रस्य यथार्था जननी तस्य पुत्रस्य वेदनां सोढुमसमर्थाऽऽसीत्।

समाजसंशोधनाय स्वसंशोधनमावश्यकम्—जनाः कथयन्ति यत् समाजस्य समूहस्य वा हितं सम्पादनीयम्, समाजस्योद्धाराय समाजदोषाणां परिमार्जनमावश्यकं वर्तते इति। किन्तु गान्धिनः सिद्धान्तोऽयमासीत् यत् व्यक्तेरुद्धारेण समाजस्योद्धारः भवति। अन्येषां दोषपरिमार्जनार्थं स्वदोषान् परिमार्जय। यदा गान्धी कुत्राऽपि कस्यापि अकार्यं पश्यति स्म तदा स्वसंशुद्धयर्थमुपवासं करोति स्म। तस्य विश्वासः आसीत् यदात्मसंशोधनेन परेषां शुद्धिः स्वयमेव भवति।

सैन्यबलस्यपेक्षयाऽऽत्मशक्तिर्बलीयसी—महात्मनः कथनमासीत् यद् यदि कस्यापि देशस्य जनता स्वात्मशक्तिमवबुध्येत तर्हि कोऽपि वैदेशिकः शासकः तस्या उपरि शासनं कर्तुं न प्रभवेत्। सैन्यशक्तिबलेन यदि सर्वा जनता नश्यति तर्हि जनानामभावे कस्योपरि शासनं करिष्यति। सैन्यबलं भयमुत्पादयति, किन्तु सैन्य-

# गान्धि-नीतिदर्शनम्

प्राध्यापकः कन्छेदीलाल, एम० ए०, साहित्याचार्यः

महात्मा गान्धी तेषु महात्मसु एक आसीत् यै. प्रतिपादितानां सिद्धान्तानां पालन स्वजीवने कृतम्। महात्मा गान्धी त सिद्धान्तं सिद्धान्तरूपेण न मनुते स्म, यस्य सिद्धान्तस्यं पालन जीवनेऽशक्य भवेत्।

नीतिकारा कथयन्ति "शठे शाठ्यं समाचरेत्" किन्तु महात्मनो नीतिविपरीतासीत्। स कथयति स्म यत् विरोधिगुणेनैव प्रस्तुतगुणस्य परिमार्जनं शक्यम्। यथाऽन्धकारस्य नाश अन्धकारेणैव न भवति, किन्तु प्रकाशेन भवति, पापप्रक्षालनं पापकर्मणा न भवति, किन्तु पुण्यकर्मणा पापप्रक्षालनं भवति। मलप्रक्षालनं मलेन, पङ्कप्रक्षालनं पङ्केन न भवति किन्तु जलेन पङ्कादिप्रक्षालनं भवति। अनेनैव प्रकारेण शठस्य शठता शाठ्याचरणेन न दूरीभवति अपितु विनयाचरणेन शठता दूरीभविष्यति।

जातककथासु राजोवादजातकनाम्नी एका कथा विद्यते। वाराणस्या ब्रह्मदत्तकुमारो राजा स्वदेशेऽतिलोकप्रिय आसीत्। स चिन्तितवान् मम देशस्य जना मम शासने निवसन्ति, अतएव ते मम नियन्त्रणभयात् मम प्रशंसा कुर्वन्ति। अन्यदेशं गत्वा स्वसम्बन्धे जनाना कीदृशी सम्मतिर्विद्यते इति ज्ञातव्यम्। रथमारुह्य सारथिं निवेश्य देशान्तर प्रचलित। तथैव कोसलदेशात् मल्लिकाख्यो नृप स्वसम्बन्धेऽन्यदेशस्यजनानामभिप्रायान् ज्ञातुमागच्छन्नासीत्। एकस्या नद्याः सेतौ उभयो रथावन्योन्यस्य समक्षमास्ताम्। सेतो संकीर्णत्वात् रथयो कस्यापि रथस्याग्रे गमनं शक्य नासीत्। उभयो रथयो सूतौ स्वकीयस्य रथस्य पश्चात्करणे स्वकीयस्य राजकुमारस्यावमान मत्वा पश्चात्कर्तुं तत्परौ नास्ताम्। उभौ सूतौ निर्णय कृतवन्तौ यत् यो राजकुमार अन्यापेक्षया हीन स्यात् तस्य रथ एव पश्चात्करणीय इति। वयसि, राज्यविस्तारे, विद्यायामन्यासु च कलासु उभावेव राजकुमारौ समानावास्ताम्। कस्य रथ पश्चात्करणीय इति समस्याऽभोत्। अन्ते कोशलराजकुमारस्य सूतोऽवदत्—"मम राजकुमार मानिन मानेन, शूर शौर्येण, शठं शाठ्येन जयति।' ब्रह्मदत्तस्य सूतेन कथितम्—'यदि इमे गुणा तर्हि अवगुणा के ? मम राजकुमारस्तु लुब्ध दानेन, अभिमानिनं विनयेन, क्रोधिनं क्षमया, दुर्जनं सज्जन-

नीतिषु धर्मस्य सम्बन्ध.—महात्मनो गान्धिन' स्पष्टं मतमासीत् यत् नीतेः धर्मेण सहाभिन्न. सम्बन्धो वर्तते। नीतिबीजं धर्मजलेन यदि न सिञ्च्येत् तर्हि फलार्थ बीजे प्ररोह एव नोद्भविष्यति। धर्मजलेन विना नीतिबीजं शुष्कता याति। अथ च नीतिरूपा मूलभित्तिर्न स्यात् तर्हि धर्मरूपस्य भवनस्य उच्छेद. स्यात। अतएव सर्वे धर्मप्रचारका धर्मेण सह नीतिं संयोजयन्ति।

नीतिबल महत्तमम्—शरीरबलेन बुद्धिबलं महत्तरं भवति, मनुष्य. पशुम्य. शरीरेण बलवत्तरो नास्ति, तथापि स श्रेष्ठो वर्तते। शरीरबलेषु ऋक्षा:, महिषा, गजा इत्यादय. मनुष्यापेक्षया बलवत्तरा सन्ति, यदि जनास्तैः सह शरीरयुद्धं करिष्यन्ति तर्हि जनानां पराजयोभविष्यति, किन्तु बुद्धिबलेन जना. बलवतः पशून् स्ववशे कुर्वन्ति। युद्धकाले येषा महती सेना भवति त एव विजयं न लभन्ते अपितु येषा राज्ञां सेनापतय. बुद्धिमन्त भवन्ति ते राजान' अल्पसैन्ययुक्ता अपि जयं लभन्ते। अनेन सिद्धयति यत् शरीरबलात् बुद्धिबलं महत्तरं वर्तते।

गान्धिना लिखितं यत् डार्विनमहोदयस्य मतानुसारेण शरीरबलात् बुद्धिबलं महत्तरं भवति, किन्तु नीतिबलं शरीरबुद्धिबलाभ्या महत्तमं वर्तते। नीतिबलस्य समक्षे बुद्धिवैभवयुक्ता अपि नम्रीभूय पराजिताः भवन्ति। ससारे जीवनस्य लोभः सर्वेषा प्राणिना भवति। यस्य बलं भवति स एव जीवति किन्तु शरीरबलात् बुद्धिबलं, बुद्धिबलादपि श्रेष्ठं नीतिबलं भवति। गान्धिना दन्तकथाना बहून्युदाहरणानि लिखितानि। ग्रीसदेशस्य जनता बुद्धिशालिनी आसीत् किन्तु यदा तस्य देशस्य जनता नीतिं तत्याज तदा तस्य जनताया बुद्धिरेव शत्रु संजाता। मनुष्यस्य गर्वरूपोऽसिस्तस्यैव कण्ठे पतति।

वसुधैव कुटुम्बकम्—महात्मा श्रामश्रामचन्द्राणा सिद्धान्तै प्रभावित आसीत्। महात्मा गान्धी न केवलं मानवान् अपितु सर्वान् जीवान् पशून्, कीटादीनपि आत्मवन् पश्यति स्म। एकदा कारागारे स्वपीडाकरक हप्तीजनमपि कष्टपीडया व्याकुलं दृष्ट्वा तस्य व्यथा निराकृतवान्। स गान्धिनो विरुद्धोऽपि समक्षो बभूव। उदारचरितानां वसुधैव कुटुम्बतुल्या भवति किन्तु अधुनातनजनाना सिद्धान्त. अस्या.नीतेर्विपरीतो वर्तते। ते स्वकुटुम्बमात्रं संसारं मन्यन्ते। यदि स्वस्य कुटुम्बं स्वस्थं सुखयुक्तं च वर्तते तर्हि ते संसारे कस्यापि प्राणिन. दु ख न पश्यन्ति, न च कस्यापि वेदनां शृण्वन्ति। स्वस्य कुटुम्बस्य सुखार्थं सर्वेषामन्येषा जनाना प्राणिना चाऽहितं कर्तुं तत्परा' भवन्ति। ते नीतिमनीतिमपि न गणयन्ति। भारतवर्षे इयं प्रवृत्तिर्वर्धमाना वर्तते। अतएव सर्वत्र भ्रष्टाचारस्य साम्राज्यं वर्तते। राजकीयसेवका. जनग्रामाः कार्यं परस्य कार्यं मन्यन्ते, ते सेवाभावेन सद्भावनया च

बलस्य हृदये योऽपि प्रभावो न भवति । आत्मबलं सैन्यबलात् प्रभावकरं भवति ।

नीतिधर्मविषये महात्मन प्रशस्ताभिप्राया —( क ) परोपकार सज्जनस्य भोजनम्—महात्मना गान्धिना नीतिधर्म इत्याख्ये पुस्तके लिखित यत् कोऽपि सत्पुरुष कीर्तिकामनामात्रेण परोपकार न करोति अपितु परोपकार बिना स व्याकुल भवति, यथा जन भोजन विना न जीवति तथैव परोपकार करण सज्जनस्य भोजन वर्तते ।

(ख) नीतिकार्यं विफलाऽपि नीतिर्न दोषकारिणी—न्यायमार्गस्य नीतिमार्गस्य वाऽऽचरण कुर्वन् जन यदि विफलो भवति तथापि नीतेर्न्यायस्य वा दोषो नास्ति अपितु ये जना नीतिं न्याय वा त्यजन्ति त एव दोषभाजनानि सन्ति ।

( ग ) नीतिकार्यं सदभिप्रायेण कर्तव्यम्—नीते न्यायस्य ज्ञानमात्र न पर्याप्तमपितु नीते र्न्यायस्य सज्ज्ञानानन्तर नीते न्यायस्य वा पालन जीवने आवश्यक वर्तते । नीतियुक्त कार्यं यद्यपि सत्कार्यं भवति किन्तु सत्कार्यकरणमात्र पर्याप्त नास्ति, अपितु तत्कार्यं सदभिप्रायेणापि कृत न वा इत्यपि विचारणीयम् । द्वौ जनौ एकमेव कार्यं कुरुत , एकस्य कार्यं नीतियुक्तमन्यस्य च नीतिरहित भवेत् । एको जनो दयया द्रवीभावमवाप्य दीनेभ्यो भोजन ददाति, द्वितीयो मान कीर्ति वा लब्धु दीनान भोजयति । उभयो कार्यं तुल्य वर्तते किन्तु प्रथमस्य कार्यं नीतियुक्त विद्यते ।

( घ ) नीतिकार्यं निर्भय कर्तव्यम्—नीतियुक्त कार्यं सदभिप्रायेण कृतमपि यदि निर्भयतापूर्वक कृत, परेषा नियन्त्रण विना कृत च भवति, तदेव कार्यं नीतियुक्त भवति । यदि किमपि सत्कार्यं परेषा नियन्त्रणेन भयेन वा कृत तर्हि तत्कार्यं नीतियुक्त न भवति । यथा कोऽपि श्रेष्ठी सेवकस्य मासिकवृत्ति कर्तव्यबुद्धया वर्धयति तदा तत्कार्यं नीतियुक्त भवति अथ च स्वामी जानाति यदि सेवकायाधिका वृत्तिर्न दीयते तर्हि सेवक कार्यं त्यक्ष्यति, तेन चाह दु खी भविष्यामि, अतएव तस्य सेवकस्य वृत्ति वर्धयति तर्हि वृत्तिवर्धन नीतियुक्त न भवति । इङ्लैण्डस्य राज्ञ द्वितीयरिचर्डाख्यस्य समीपे यदा कृषकाणा समूह क्रोधवशात् स्वाधिकार-याचनाय प्राप्त तदा भयात् राजाऽधिकारपत्रे हस्ताक्षर कृत्वा कृषकेभ्य दत्तवान् किन्तु यदा कृषकेभ्यो भय दूरीभूत तदा तेन राज्ञा स्वप्रदत्तमधिकार पत्र निरस्तम् । तस्य द्वितीयरिचर्डस्येद कार्यं कथमपि नीतियुक्त नासीत् । नीतिमार्ग वीराय महावीराय वा भवति । भीरवो जना नीतिमार्गे चलितु न प्रभवन्ति ।

नीतिषु धर्मस्य सम्बन्ध —महात्मनो गान्धिनः स्पष्टं मतमासीत् यत् नीतेर्धर्मेण सहाभिन्नः सम्बन्धो वर्तते। नीतिबीजं धर्मजलेन यदि न सिञ्चेत् तर्हि फलार्थं बीजे प्ररोह एव नोद्भविष्यति। धर्मजलेन विना नीतिबीजं शुष्कतां याति। अथ च नीतिरूपा मूलभित्तिर्न स्यात् तर्हि धर्मरूपस्य भवनस्य उच्छेदः स्यात। अतएव सर्वे धर्मप्रचारका धर्मेण सह नीतिं संयोजयन्ति।

नीतिबल महत्तमम्—शरीरबलेन बुद्धिबलं महत्तरं भवति, मनुष्यः पशुम्यः शरीरेण बलवत्तरो नास्ति, तथापि स श्रेष्ठो वर्तते। शरीरबलेषु ऋक्षाः, महिषा, गजा इत्यादयः मनुष्यापेक्षया बलवत्तरा सन्ति, यदि जनास्तैः सह शरीरयुद्धं करिष्यन्ति तर्हि जनाना पराजयोभविष्यति, किन्तु बुद्धिबलेन जनाः बलवतः पशून् स्ववशे कुर्वन्ति। युद्धकाले येषा महती सेना भवति त एव विजयं न लभन्ते अपितु येषा राजा सेनापतयः बुद्धिमन्त भवन्ति ते राजान अल्पसैन्ययुक्ता अपि जयं लभन्ते। अनेन सिद्धयति यत् शरीरबलात् बुद्धिबलं महत्तरं वर्तते।

गान्धिना लिखितं यत् डार्विनमहोदयस्य मतानुसारेण शरीरबलात् बुद्धिबलं महत्तरं भवति, किन्तु नीतिबलं शरीरबुद्धिबलाभ्या महत्तमं वर्तते। नीतिबलस्य समक्षे बुद्धिवैभवयुक्ता अपि नम्रीभूय पराजिताः भवन्ति। संसारे जीवनस्य लोभः सर्वेषा प्राणिना भवति। यस्य बलं भवति स एव जीवति किन्तु शरीरबलात् बुद्धिबलं, बुद्धिबलादपि श्रेष्ठं नीतिबलं भवति। गान्धिना दन्तकथाना बहून्युदाहरणानि लिखितानि। ग्रीसदेशस्य जनता बुद्धिशालिनी आसीत् किन्तु यदा तस्य देशस्य जनता नीतिं तत्याज तदा तस्यजनताया बुद्धिरेव यातु संजाता। मनुष्यस्य गर्वरूपोऽसिस्तस्यैव कण्ठे पतति।

वसुधैव कुटुम्बकम् —महात्मा ग्रामग्रामबन्धूणा सिद्धान्तैः प्रभावित आसीत्। महात्मा गान्धी न केवलं मानवान् अपितु सर्वान् जीवान् पशून्, कीटादीनपि आत्मवत् पश्यति स्म। एकदा कारागारे स्वपीडाकारक हस्तीजनमपि कष्टपीडया व्याकुलं दृष्ट्वा तस्य व्यथा निराकृतवान्। स गान्धिनो विपक्षोऽपि समक्षो बभूव। उदारचरितानां वसुधैव कुटुम्बतुल्या भवति किन्तु अधुनातनजनाना सिद्धान्तः अस्या नीतेर्विपरीतो वर्तते। ते स्वकुटुम्बमात्रं संसारं मन्यन्ते। यदि स्वस्य कुटुम्बं स्वस्यं सुखयुक्तं वर्तते तर्हि ते संसारे कस्यापि प्राणिन दुःखं न पश्यन्ति, न च कस्यापि वेदना शृण्वन्ति। स्वस्य कुटुम्बस्य सुखार्थं सर्वेषामन्येषा जनानां प्राणिना याऽहितं कर्तुं तत्परा भवन्ति। ते नीतिमनीतिमपि न गणयन्ति। भारतवर्षे इयं प्रवृत्तिर्वर्धमाना वर्तते। अतएव सर्वत्र भ्रष्टाचारस्य साम्राज्यं वर्तते। राजकीयसेवकाः जनताया कार्यं परस्य कार्यं मन्यन्ते, ते सेवाभावेन सद्भावनया च

जनताया. कार्यं न कुर्वन्ति । उत्कोचलोभेन सर्वत्र जनताया. कार्याणि भवन्ति । नीतिबलेन रहितस्य देशस्य पराजय अथ च विनाश सम्भव एव ।

अर्थनीति —महात्मा गान्धी रस्किनमहोदयस्य पुस्तक पठित्वा तस्य चिन्तनेन प्रभावित आसीत् । गान्धिनोऽर्थशास्त्र-विषये चिन्तन दार्शनिकस्य चिन्तनेन न्यून नास्ति । अर्थशास्त्र केवल धनलाभस्य विवेचना करोति । अर्थशास्त्राणा शास्त्र केवम धनार्जनस्य शास्त्र विद्यते इति जनाना धारणा । धन तु अनेकोपायै प्राप्यते, एकस्मिन् युगे यूरोपमहाद्वीपे जना धनिन विषदानेन हत्वा तस्य धनेन स्वय धनिका भवन्ति स्म । अधुना व्यावसायिका निर्धनेभ्य खाद्यपदार्थेषु मिश्रण कृत्वा धनिका भवन्ति । अय प्रयोगोऽपि विष दत्त्वा धनिकीभवनमिव विद्यते । अय प्रयोग धनिकीभवनस्य कलाऽथवा विज्ञान विद्यते । परन्तु नीतेरनीतेर्वा विवेक त्यक्त्वा धनार्जनं भवति । धन साधनमात्र मन्तव्यम्, धनेन सुख दु खम् उभय सभाव्यते, यदि धन विवेकिनो हस्त गच्छति तर्हि कृषिर्भवति, अन्नमुत्पद्यते, कृपया निर्दोष श्रमं कृत्वा सन्तोष लभन्ते । परन्तु दुर्जनस्य हस्ते धनस्य सद्व्ययेन युद्धस्य सामग्री निर्मीयते, जनाना सर्वनाशो भवति । युद्धे सत्यमावृभो भवति ।

नैतिकनियमैरर्थशास्त्रे स्नेहस्य सहानुभूतेश्च समर्गो भवति । स्नेहस्य सहानुभूते ससर्गेणैव कार्यस्य सफलता दृश्यते केवलमर्थशास्त्रनियमेन कार्येषु साफल्य न दृश्यते । यदि सेनानायक अर्थशास्त्रस्य नियमानुसारेण सैनिकै सह व्यवहरति, तदा निर्दिष्ट कार्यं न सभवम् । सेनापते सैनिकाना मध्ये स्नेहस्य सहानुभूतेश्च कार्यमेव यथार्थ बल भवति । स्नेहेनैव सैनिक सेनापत्यर्थं मर्तुं तत्परो भवति ।

सैनिक परेषा जीवननाशाय न भवति, अपितु स जनाना प्राणरक्षार्थं स्वजीवन समर्पयति । सैनिक सैनिकपदग्रहणसमय एव स्वजीवन राष्ट्राय समर्पयति । अयमेव नियम प्राड्विवाकस्य, चिकित्सकस्य, धर्मोपदेशकस्य कृते विद्यते । प्राड्विवाकेन मरणपर्यन्तमपि न्यायप्राप्त्यर्थं प्रयतितव्य, चिकित्सकेन प्राणसङ्कटेऽपि आतुरस्योपचार कर्तव्य । धर्मोपदेशक प्राणसकटेऽपि सज्ञान नीत्युपदेश सन्मार्गं च प्रदर्शयेत् ।

व्यापारिकक्षेत्रे जनैरिद स्वीकृत यत् व्यवसायिन कार्यं केवल धनसञ्चयो वर्तते, किन्तु यथार्थरूपेण इय मान्यता त्रुटिपूर्णा वर्तते । यदि व्यवसायी केवल नीत्याऽनीत्या वा केनापि प्रकारेण धन सञ्चिनोति तर्हि तस्य कार्यं चौर्यमेव विद्यते । यथा सैनिकस्य कर्तव्य राष्ट्रहिताय प्राणत्यागो विद्यते, तथैव व्यावसायिकस्य कर्तव्य जनहिताय न केवल धनत्याग किन्तु प्राणत्यागो अपि विद्यते । सर्वेषु

राज्येषु व्यवसायिनः कार्यमावश्यकवस्तूनां व्यवस्थाकरणं विद्यते। धनस्य लाभस्तु तस्यानुषङ्गिकं फलं विद्यते। व्यावसायिको बहुभ्यो जनेभ्यः सेवाया अवसरं दत्त्वा जीविकां ददाति। कतिपयबालकाः स्वनिवासस्थानं त्यक्त्वाऽन्यत्र कार्यं कुर्वन्ति। तत्र व्यावसायिका एव बालानां पितरौ स्थाने भवन्ति।

सार्वजनीनमर्थशास्त्रमेव कल्याणकरलोकप्रियं च भवति। सार्वजनीनस्यार्थशास्त्रस्य अर्थं उचितस्थाने, उचितसमये सुखदायकानां दुःखनिवर्तकानाञ्च वस्तूनामुत्पादनं संग्रहश्च। यः कृषकः समये उत्पादनं करोति, यः शिल्पकारः उचितं कार्यं करोति या स्त्री समये भोजनं पचति ते सर्वे यथार्था अर्थशास्त्रिणः सन्ति। ये जना समस्तस्य राष्ट्रस्य सम्पत्तिवर्धने संलग्नाः सन्ति, ते यथार्थाः अर्थशास्त्रिणः सन्ति। अनेन प्रकारेण महात्मनो गान्धिनः अर्थशास्त्रविषये ऽपि नूतनं दर्शनं विद्यते।

यद्यपि महात्मनो गान्धिनः नीति-सिद्धान्ताः पूर्वमहापुरुषप्रतिपादिताः सन्ति तथापि तेषां विषये मौलिकचिन्तनेन एवं स्वजीवने पालनेन च गान्धिसिद्धान्ताः "गान्धिनीति" रिति नाम्नाऽपि प्रसिद्धाः सन्ति। तस्य सिद्धान्ताः गान्धिदर्शननाम्नाऽपि प्रसिद्धाः सन्ति। गान्धिनो विचारेषु समन्वयो दृश्यते अतएव तस्य विचारधारा सर्वोदयनाम्नाऽपि ज्ञायते। गान्धिनीतिः जनकल्याणकारिणी, समाजव्यवस्थापिका च वर्तते।



# महात्मगान्धिनो जीवन-दर्शनम्

श्री गोविन्द नरहरि वैजापुरकरः, एम० ए०,
न्याय-वेदान्त-साहित्याचार्य

जयन्ति ते महात्मानो गान्धिनः सत्यशालिनः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥

महत्प्रमोदावहमेतत् यद् वर्षेऽस्मिन् प्रायोऽखिले विश्वस्मिन् भारतस्य राष्ट्रपितुः महात्मगान्धिनः शतसंवत्सरीमहोत्सवः परया श्रद्धा-भक्त्या परिचाल्यते । १७६९ मितेशवीयवत्सरे अक्तूबरमासस्य शोभने द्वितीये दिने श्रेष्ठेनानेन भारतवसुन्धरालङ्कारेण न केवलमस्माकमेव राष्ट्रं समुद्भासितं स्वावतरणेन, प्रत्युत विश्वस्मै भारतं प्राणप्रदं सत्याहिंसापीयूषं श्रवणाञ्जलिपुटपानेन पाययित्वा भौतिकता हालाहलस्य तापशामकोऽमोघ उपायः परया कृपया उपायनीकृतः ।

सामान्यतो नैकेषु राष्ट्रेषु यथाकालमसंख्याता महापुरुषाः समुदयन्ते । भारतेऽपि अनादिकालतोऽद्य यावत् कियन्तो महात्मानोऽवतीर्णाः । किन्तु आत्महनो भौतिकविज्ञानस्य परमोत्कर्षंकरेऽस्मिन् युगे शाश्वतिक्याः शान्तेः भारतीयः प्रत्नतरो राद्धान्तोऽमितरसाधारणेन लोकग्राह्येण नव्येन व्यापकेन रूपेण महात्मगान्धिनैव प्रसारितः । नूनं सर्वथा समुचितेऽवसरे विश्वस्मिन् तत्प्रसारण-माध्यमस्य सौभाग्यमेतेभ्य एव महात्मभ्य सुलभीभूतम् । अत एव काम राज-नैतिक्यादिदृष्टिभिस्तेषां व्यक्तित्वमतितरां स्पृहणीयं समनुकरणीयञ्च । वयं पुनः राजनीतिललनाया सौभाग्यबिन्दोर्धर्मस्याध्यात्मस्य वा प्रोन्नायकस्य सात्त्विक-सन्तविशेषरूपेणैव तान् सर्वाधिकस्पृहणीयान् मन्महे । लोकोत्तरमेतत् तेषां बलमेव यदा सर्वथा निरस्त्रमस्माकं राष्ट्रं चिरकालिकवैदेशिकदासतापाशं उन्मोचयितुं प्राभवत् ।

महात्मगान्धिभिरस्माकं ससारयात्रिणां कृते नैकानि बहुमूल्यानि जीवनपाथेयानि उपायनीकृतानि । तानि किल परत्र इव इहापि शान्ति-सौमनस्याय सुखमय-जीवनयापनाय च सविशेषं प्रभवन्ति । नूनम् ईश्वरस्तत्प्रार्थना, अहिंसासत्यादीनि एकादशव्रतानि धर्मादृता येव उपायनानि । पूर्वमेतानि व्यक्तिगतोपास्तिसाधनत्वेन, तत्रापि च पारमार्थिकसाधनत्वेनैव समाद्रियन्ते स्म । गान्धिमहाभागैः पुरस्तानि

सामूहिकसाधनरूपेण तत्रापि च न केवलमध्यात्ममार्गे एव, प्रत्युत जीवनस्य निखिलेषु क्षेत्रेषु निर्विशेषतया प्रयोजकानीति महता भरेण सङ्घुष्टम्। यदि वयं तेषु दृशमावर्जयन्तो जीवने तानि समनुकर्तुं प्रयतेमहि तदा संसारयात्रायामपि कदापि वैफल्यं न भजेम। परत्र च तेषा यादृशी कार्यकारिता, न सा विपश्चिता तिरोहितेति न तत्र बहु वक्तव्यमवशिष्यते। अत आगच्छन्तु, शुभेऽवसरेऽस्मिन् क्षणं तानि जीवन-पाथेयानि तेषामेव शब्दैराकलय्य समीक्षया समासतो भावयाम.।

## ईश्वरस्तत्प्रार्थना

### ईश्वरः

ईश्वरविषये महात्मानस्ते वदन्ति—"ईश्वरोऽस्त्येव। न दृश्यत इति तु अस्माकं दौर्भाग्यम्। निर्धनानां सेवैव ईश्वर-सेवा। स हि पिपीलिकायै कणं हस्तिने च तदभिमतं ददाति। पिपीलिकाया अपि ज्ञानतोऽपरिपीडनं तत्सेवैव। यो हि तां समाचरति, सोऽन्यान् प्राणिनः स्वसजातीयं मानवञ्च कथन्नाम परिपीडयेत्? आत्मज्ञानमिदं जीवजातेन अर्थात् ईश्वरेण सह ऐक्यतन्मयभावने नैव समधिगम्यते। जीवजातेन सहैक्यसम्पादनं नाम तद्दुःखेन स्वात्मनि दुःखानुभूतिस्तद्दुःखनिवारणञ्चे" ति।

ईश्वरविषयकाण्येतानि तेषांसूत्राणि सर्वथा अध्यात्मनिष्ठान्यपि व्यवहारविधिमपि सौमनस्याधायिनी विदधतीत्यहो तेषां प्रौढत्वम्।

### प्रार्थना

'प्रार्थना'-शब्दार्थं निरूपयन्तस्ते प्राहु—"स्वीयाऽयोग्यताया अशक्तेश्च स्वीकरणं प्रार्थना। सहस्रनाम्नो भगवतो यत्किमपि नाम रोचेत, तद् भजनीयम्। सर्वाण्यपि नामानि एकं चैतन्यमेव व्याहरन्ति। प्रार्थना भजनं वा न जिह्वया, हृदयेन जायते। अत एव मूका अपि प्रार्थनां कर्तुं शक्नुवन्ति। हृदि हालाहलं चेत्कृतं जिह्वाप्रवर्तिना अमृतेन। यावन्मानवोऽन्तर्बहिः सत्यं सामाजिकतां पावित्र्यादिकञ्च गुणजातं न वर्धयति, हृदयेन रामनामोच्चारणं सर्वथा ऽसम्भवि" इति।

प्रार्थना-निरूपणेऽस्मिन् हार्दिकतया समं सद्गुणानामाधानाय तद्वर्धनाय च उपदेशोऽयं प्रत्नोपदेशसागरात् नूत्नरत्नाविष्करणं नाम। महात्मनां श्रेष्ठतमाः शिष्याः सर्वोदयदर्शनाचार्याः श्रीविनोबा भावे महोदया अपि कथयन्ति यदात्मस्मृतिव्यतिरिक्तानां सर्वासां स्मृतीनां निवारणं ब्रह्मनिर्वाणाय आवश्यकम्। आत्मस्मृत्यैव इतरस्मृतीनां विलयः। परं स्मृतिविलयोऽप्यतीव कठिनतरः। अन्ततस्तदर्थं भगवतो भक्तिरनिवार्यैव। भगवत्स्मृत्यैव भगवत्परतयैव वा व्यर्थ-स्मृतिनिराकरण-

मिद प्रभवति। अतएव भगवान् वदति—'अनन्यचेता सततम्' इत्यनन्तर 'यो मा स्मरति नित्यश' 'युक्त आसीत मत्पर' इति च। अनन्यचेतस्त्व स्मृतिनिराकरणमेव। तच्च अन्ततो 'यो मा स्मरति नित्यश' इत्यनेन अर्थात् भगवत्स्मृत्यैव साध्यते। अपूर्ते पूरण वाह्यतो वस्तु समादायैव क्रियते सर्वस्या अपि। आत्मस्मृतेरपि पूरण पर्यन्ते परमात्मन एव अक्यते। स हि आत्मना निधि। इत्यम् ईश्वरस्मरणम् ईश्वरप्रार्थना वा सर्वथाऽनिवार्येति तै ससाधितमस्ति।

## एकादशव्रतानि

### व्रताना मूल्यम्

व्रतानि पुनर्भारतीयसस्कृते सुप्रमाणितानि समुत्कर्षसाधनानि। तैरेव मानव क्रमश उच्चादुच्चतर पद समारोढु दृढावलम्ब प्रभवति। व्रतपालन कस्यापि साधकस्य, सेवकस्य, ब्रह्मचारिण, गृहस्थस्य, वानप्रस्थस्य, सन्यासिन, किं बहुना, सर्वस्य मानवस्य अनिवार्य वस्तु। अतएव वैदिके धर्मे 'चतुर्वर्ग चिन्तामणि' प्रभृतिषु ग्रन्थेषु स्वतन्त्रमेव व्रतखण्ड निर्माय तद्विशेषतो व्याख्यानविषयता गच्छति। जैन-बौद्ध-सिख यावनाद्यवान्तरसम्प्रदायानपि तानि पूर्णतो व्याप्नुवन्ति। जैनधर्मे पुन समग्र जीवनमेव प्रायो व्रतमय याप्यते साधकै। महात्मगान्धिभिरपि व्रतान्येतानि समादृत्य स्वीययाऽनितरसाधारणया प्रतिभया अध्यात्मजीवनवत् व्यावहारिकेऽपि जीवने सक्राम्य मानवस्य उभयलोकपन्थानौ प्रशस्तीकृतौ। ते वदन्ति—

"प्रतिज्ञाहीन जीवन किल निराधार गृहमिव। प्रतिज्ञाग्रहण नाम निश्चलीभाव। अनिश्चलोऽदृढप्रतिज्ञश्च कस्य विश्वासभाग् भवेत? यो हि स्वात्मनो जीवन प्रतिज्ञामय न विदधाति, न स जातुचित् स्थैर्य भजते।

"भगवत पतञ्जले पञ्चव्रतेषु य कमप्येक समादाय समुपास्तिश्चिकीर्ष्येत चेन सा सम्भविनी। किन्तु तेभ्य सत्यमेकमाद्रियेत चेत्तदा तु तत्सम्भव। यतो हि विशिष्टानि चत्वारि महाव्रतादिसत्ये निगूहितानि। अन्यच्च, युगस्यास्य कृते पुनर्न पञ्चैव, प्रत्युत एकादशव्रतान्येव महाव्रतोपव्रतानि परमावश्यकानि। श्री विनोबा भावे महाभागेन नीति-सूत्ररूपेण सग्रथितानि श्लोकद्वये। यथा—

> अहिंसा सत्य अस्तेय ब्रह्मचर्य असग्रह।
> शरीरश्रम अस्वाद सर्वत्र भयवर्जन॥
> सर्वधर्मसमानत्व स्वदेशी स्पर्शभावना।
> विनम्र व्रतनिष्ठा से ये एकादश सेव्य हैं॥ इति।

व्रतान्येतानि सत्यपालनादेव आविर्भाव्यानि। सर्वाण्यपि समबलानि। एव-

स्यापि वैकल्ये सर्व-वैकल्प-प्रसंग । स एव यथार्थतो ब्रह्मचारी यो मनसा, वाचा कर्मणा च एकादशव्रतान्येतानि समाचरेत्" इति ।

एतेषु आदित पञ्च 'महाव्रत' नाम्ना प्रथितानि, प्राचीनकालत समाजे प्रचलितानि । शिष्टानि षट् पुनर्महात्मनानेन सयोजितानि 'उपव्रत' कल्पानि । अहिंसा-सत्या स्तेय-ब्रह्मचर्यापरिग्रहरूपाणा महाव्रताना यमापरपर्यायाणा प्रचलन प्राचीनकालत एवाऽऽसीत । पर तानि मुमुक्षुमात्रानुसरणीयान्येवाऽभवन् । उपव्रतसहितान्येतानि पुन सर्वेषा मानवाना कृते निर्विशेषतया समादरणीयानीति महात्माऽय व्याजहार । व्रतानामेतेषा साधनाय तेन महात्मना दक्षिणाफ्रीकादेशे भारते च नैका आश्रमसस्था सङ्घटिता । तत्र स्थित्वा स्वय तान्यनुष्ठाय आश्रमवासिभिरपि तदनुष्ठान कारयामास स । एकादशव्रतानामेतेषा स्वरूपाणि तेषा पर्यवेक्षणञ्च परमुपयोगीति कृत्वा समासतस्तदत्र समुपन्यस्यते ।

## अहिंसा

*अहिंसाविषय महात्मभिरेभि बहु प्रपञ्चितमास्ते । तेषा समग्र जीवनमेव* अहिंसाया मूर्तरूपम् । तदेव व्रत व्याचिख्यासुरय महात्मा वदति—"प्रेम नामैतादृश वस्तु यत कठोरतममपि शत्रु मित्रता नयति । सुपुप्तौ या किलाऽहिंसानाम्ना प्रथिता, सैवाऽवस्था जागरे प्रेमाख्या भजते । अहिंसामार्गो न भयाप्लुताना कापुरुषाणाम । क्षात्रधर्मस्य परिसीमैव सा । यतो हि तत्रैवाऽभयस्य पोडशकला समुल्लसन्ति । अस्या आरम्भो गृहत एव मान्य । मानसिकोऽय स्थितिविशेष । एवमहिंसा विहाय कापि मर्यादा न किमपि मूल्य धत्ते ।

"इत्थमहिंसा नाम प्रेमसमुदायो वैरभावस्य सर्वथा त्यागश्च । तत्र दीनता भीरुता वा कथमपि पद नादधते । दृढता, वीरता, निश्छलता चैव तदुपादानभूता । केवल जीवदयापालनेनैव न कामादिपड्रिपूणा जय साध्यते । पर प्रतिमानवमहिंसैव तत्र प्रभवति । पड्रिपुविजयिनश्चत प्रेमरसाप्लुत सागरो नाम" ति ।

अहिंसाया विस्तृत विवरण योगशास्त्रे पुराणेपु जैनधर्मे च द्रष्टु शक्यम् । भगवता पतञ्जलिना तु स्पष्टमेवोक्तम्—*'अहिंसाप्रतिष्ठाया तत्सन्निधौ वैरत्याग '* इति । पर महात्मनाऽनेन साऽत्र इत्थ व्याख्याता यथा इह परत्र च सममेव समुपयुक्ता सिद्ध्यति । विनोबामहाभागै पुनरस्या महात्मोक्ते यादृश विश्वतोमुख भाष्य कृत तदपूर्वमेव । सक्षपतस्तेषा मतन अहिंसाया गणित नाम 'आत्मदर्शनम् + हरिदर्शनम् = पूर्णाऽहिंसा' इत्येव निष्कर्षरूपेण वक्तु शक्यते । अतो व्रतमिद सर्वैरविशेषेण समनुष्ठेयम् ।

द्वितीयस्य सत्यव्रतस्य विषये महात्मानः सङ्किरन्ते यत् 'सत्यं नाम मनोवाक्कायानामैकरूप्यम्। ततोऽप्यधिकं यदि किञ्चित् चेत्तदपि। जगति यद्वर्तते, आसीत्, भविष्यति वा, तदेव सत्यम्। एतादृशं सत्यं परमात्मैव, नहि ततः परं किञ्चित्। शुद्धसत्यस्य शोधनं नाम रागद्वेषादिद्वन्द्वेभ्यो विमुक्तिः।"

इत्थं यदा सत्यं परमात्मवद् एकमेव किमिति तदा एकस्यैव तस्य विभिन्नानि रूपाणि दृश्यन्ते जगति। एकमेव सत्यमन्यस्मै असत्यं प्रतीयते, कोऽत्र हेतुः? प्रश्नमिमं समुत्तरयन्तो महात्मान आहुर्यत् "महत्तरस्य विम्बस्य आश्रयभेदेन विभिन्नरूपतेविवत् सत्यस्यापि नैकानि रूपाणि दृश्यन्ते। तथाप्यन्ततस्तत् एकरूपमेव। एवं स्थितौ 'सत्याचरणमेव मे लक्ष्यम्, इन्द्रियाधीनं कदापि न भविष्यामी' ति निश्चयवान् मनोभूमौ स्थित्वा मनसा यादृग्-रूपं सत्यमनुभवेत्, तदाचरणमेव सत्याचरणं तस्मै हितम्। परस्यानुकरणं न जातु सत्याचरणम्। मनसा, वाचा, कायेन चैकरूपमेव कर्तव्यं सत्यान्वेषकेण। इदं तु सर्वैः कर्तुं शक्यत एव, काम परमस्य सत्यस्य समनुष्ठानं सुदुष्करं भवेत्।

"अन्यच्च, सत्योपासकस्य कृते मौनं महत्तरमुपकारकम्। भाषणेऽतिशयोक्तेरवकाशोऽवर्जनीय एव। परं मौनेन नूनमसत्यवर्जनं बहुशः सहजतश्च सिद्ध्यति। मितभाषी अपि विचार्य वदतीति मितभाषणेनापि असत्यतो रक्षणं सत्यपालनञ्च अर्थतः ससाध्यते" इति।

त्रिकालाबाध्यं सत्यम्, तच्च ब्रह्मणो नीरूपस्य निर्धर्मिणः प्रथमं रूपं सहजो धर्मो वा। तदेव हि सत्यं महात्मनोऽस्य अन्ततः समुद्दिष्टम्। तदेव पुनर्यथा तैर्व्यावहारिकोपास्तिविषयतां नेतुं समुपदिष्टम्, सर्वं शास्त्रसार एव। सत्येन सह मौनस्य साध्य-साधनभावः पुनरतितरां स्मरणीयोऽनुकरणीयश्च। इत्थं प्रत्येकेन सत्यव्रतोपासनेन परमसत्यपदं सर्वथा समाक्रमणीयमेव।

### अस्तेयम्

अस्तेयव्रतविषये गान्धिमहाभागा वदन्ति यत् "जगति परस्य कस्यचन वस्तुनोऽपहरणं चौर्यं स्तेयं वेति नाम्ना प्रथितमेव। तदभाव एवास्तेयम्। पुनः स्वाधिकृतस्यापि पैतृकदायादेः विना तदाज्ञां ग्रहणमपि स्तेयमेव। किं बहुना, यत्स्वात्मने न परमावश्यकम्, तद्ग्रहणमपि अस्तेयव्रत-विघातकमेव" इति।

मार्गे पतितस्य अनधिकृतवस्तुस्यापि वस्तुनो ग्रहणं स्तेयमेव। उपवासकाले स्वादचिन्तनमपि अस्यामेव कोटौ अन्तर्भवति। अन्ततः परोद्भावितस्य विचारस्य

स्वकीयविचाररूपेण समुपस्थापनमपि तथा। एवमादीन् स्थूलसूक्ष्मान् स्तेयप्रकारान् सावहितमालक्ष्य तेषां वास्तविकं वर्जनमेव अस्तेयव्रतं महात्मना मतेन। अस्तेय-व्रतानुष्ठातुं कृतेऽतितरां नम्रता, विचारशीलता, सावधानता, निराडम्बरता च परमावश्यकी।

महात्मनामेषां प्रेष्ठशिष्यैः श्रीविनोबा महाभागैः पुनरयं विषयः प्रकारान्तरेण व्याख्यातः। ते वदन्ति—"मनुष्यस्य त्रयो जीवनयात्रा-प्रकाराः भवन्ति १ भिक्षा, २ व्यवसायः, स्तेयं च। भिक्षा नाम समाजस्य अधिकाधिकां सेवां कृत्वा स्वल्पात् स्वल्पतरं ग्रहणम्। व्यवसायो नाम समाजस्य विशिष्टां सेवां कृत्वा तस्याः समुचित-शुल्कग्रहणम्। इतोऽन्यत् स्तेयं नाम समाजस्य न्यूनातिन्यूनां सेवां कृत्वा अधिका-धिकग्रहणम्। प्रसङ्गविशेषे समाजस्य हानिमपि कृत्वा स्वार्थसाधनं स्तेयमेव। एता-दृशस्य स्तेयस्य सर्वथा परिवर्जनमेव अस्तेयव्रतं महात्मानुगृहीतस्य अस्तेयव्रतस्य रहस्यतमं वस्तु" इति।

ब्रह्मचर्यम्

ब्रह्मचर्य-व्रतविषये महात्मना मतमिदं यत् "यो मनसा विकारी तस्य ब्रह्मचर्यं स्खलितमेव मन्तव्यम्। विचारे निर्विकारतामबिभ्रत् कोऽपि पूर्णब्रह्मचारी भवितुं न शक्नोति। तच्च 'पर'—दर्शनेनैव साध्यते। दृष्टे परादरे स्त्री-पुंभेद एव विलयं गच्छतीति कुतोऽष्टविधमैथुनान्यतमरूपस्य ब्रह्मचर्यविप्रतीपभावस्य प्रसरः। निर्भय-स्यास्य ब्रह्मचर्यस्य पालनं सर्वदा शुभचिन्तनेनैव साध्यम्। नामस्मरणमप्यत्र भूयसा सहायकं भवती"ति।

व्रतस्यास्य निरूपणे महात्मना हार्दमिदमवगम्यते यत् न केवलं जननेन्द्रिय-संयमनमेव ब्रह्मचर्यम्। प्रत्युत एकादशेन्द्रियाणां सर्वेषां संयम एव। आसक्तः परो न कोऽपि ब्रह्मचर्यस्य परिपन्थी। सङ्कुचितं प्रेमैव तस्यापरं पर्यायः। व्यापकं प्रेम तु अनासक्तावेव परिगण्यते। अतएव गार्हस्थ्येऽपि सन्तानमात्रकामनया स्त्रीसङ्गे ब्रह्मचर्यं न व्याहन्यते। तत्रापि प्रथमसन्तानपर्यन्तं नियतकाले ऋतुकाले तथा गमने इति हि शास्त्रकृतां निर्देशः। प्रथमसन्तान एव धर्मज उच्यते। द्वितीयादि-सन्तान-जातानि पुनः कामजान्येवेति शास्त्रकृतां राद्धान्तः। एतादृशं पूर्णं निर्भयं ब्रह्मचर्यं तु परदर्शनेनैव साध्यत इति महात्मना वचः सर्वथा शास्त्रानुमोदितमेव। यावत् तन्न सिद्ध्यति, तावत् शुभचिन्तन-भगवन्नामस्मरणेऽपि ब्रह्मचर्यसाधने परं प्रयोजके जनसाधारणानुकरणीये। सर्वदा शुभचिन्तनेन मनसि विकारप्रसरो वार्यते। भग-वन्नामस्मरणेन च दैवात् तादृक्प्रमादावसरे समुपस्थितेऽपि नूनं ततो रक्षणं भवति।

## अपरिग्रह-व्रतम्

अपरिग्रहापरपर्यायस्य असङ्ग्रहव्रतस्य विषये महात्मानो वदन्ति यत् "अनावश्यकवस्तुनो ग्रहणमेव सङ्ग्रहः। सत्यशोधकेन सदैव असङ्ग्रहिणा भाव्यम्। आदर्शभूत आत्यन्तिकोऽपरिग्रहस्तु गृहान्न-वस्त्र-वलहीनो भूत्वा विचरणम्। अन्नादीनामावश्यकता भगवानेव पूरयिष्यतीति मत्वा तथा वर्तनम्। अमुमेवापरिग्रहं हृदि विभाव्य जीवने यावच्छक्यम् अनावश्यकवस्तुनो ग्रहणं परिवर्ज्य व्रतमिदमनुष्ठेयं जनसाधारणेन। परिग्रहेऽस्मिन् निरर्थकविचारा अपि विषयतां भजन्ते। ईश्वरविमुखतापादका विचारा अपि तथा। अतोऽपरिग्रहनिष्ठैस्तेभ्यः सर्वेभ्यो विरतैर्भाव्यमि"ति।

महाव्रतमिदं सावधानतावृत्ते समानान्तरं वक्तुं शक्यते। यावदावश्यकं तावदेव उपादेयम्, अन्यत् त्याज्यमिति सावधानवृत्त्यैव पालयितुं शक्यमिदम्। तदर्थं स्वल्पातिस्वल्पवस्तुभिः जीवननिर्वाहः स्वावलम्बनञ्च परमावश्यकम्। कस्यापि वस्तुनोऽधिकाधिकमुपयोगः स्थिरीकरणञ्चेति व्रतस्यास्य मुख्यं सूत्रम्। अपरिग्रहो नाम नालस्येन प्रमादेन वा वस्तुनां विनाशनम्। अपरिग्रहेणानेन सुखमविनाभूतम्। अन्ततो देहस्यापि अपरिग्रहपर्यवसायी त्यागः परमस्य लक्ष्यम्। देहं विसृज्य परमात्मनि विलीय तदीयशाश्वतानन्दानुभव एवासङ्ग्रहस्य वास्तविकी सिद्धिः। तदेवं लक्ष्यं पुरतः संस्थाप्य यथाशक्ति तदनुकूलं प्रयतनमेव असङ्ग्रहव्रतनिष्ठाया सारतत्त्वं वक्तव्यं भवति।

## शरीर-श्रम-व्रतम्

शरीर-श्रम-व्रतविषये महात्मगान्धिनाभिहितम् यत् "कायिक-श्रमो मानवमात्रस्य कृते सर्वथा अनिवार्य एव। जीवनयात्रायाः कृते श्रमकरणम् ईश्वरीयो निर्देश एव। यद्यस्य पालनं प्रामाणिकतया क्रियेत चेत् साम्प्रतिक-स्वामि-भृत्ययोः व्यापकः कलहो विवादः सङ्घर्षो वा सहजत एव विलयं गच्छेत्। अहिंसायाः पालनाय, सत्यस्य आराधनाय, ब्रह्मचर्यस्य च स्वाभाविकीकरणाय कायिकः श्रमो रामबाण एव। 'स्वीयस्वेदबिन्दून् पातयित्वा करपट्टिकामर्जय' इत्यस्ति 'बाइबिल' ग्रन्थस्य वचनम्। यज्ञा हि बहुविधा भवन्ति। तेषु करपट्टिका ( रोटी ) समर्जनाय शरीरश्रमोऽन्यतमः। तथा प्रयतमाने विपुलान्नलाभो राष्ट्राय, तेन च विविधचिन्ताभ्यो निवृत्तिश्च जायते" इति।

श्रीविनोबामहाभागैः यज्ञस्य व्याख्यैवेयं कृता यज्ञयतो मानवः समाजस्य उपकारं गृह्णाति। तेन च तत्तापनानां ह्रासो जायते। यज्ञः पुनस्तद्भारस्य

पूर्तिमाचरन्ति। एवञ्च समाजोपभुक्तवस्तूना ह्रासपूर्तिकरो यज्ञ सिद्धयति। सत्येवं शरीरश्रमस्य यज्ञत्व सुस्पष्टमेव। महात्मगान्धिभि शरीरश्रमस्यास्य सिद्ध्यै एव चरखा-चक्र प्रस्तूय सूत्रनिर्माणविधिरुद्भावित। तेन च दैनन्दिनावश्यकताया अनान तर द्वितीयावश्यकताप्रकारस्य वस्त्रस्य स्वावलम्बन सहजत सिद्ध्यति। स्वावलम्बि-जीवनस्य महत्त्वं विदुषा कृते पृथक् निष्पणीयता नापेक्षत एव। अस्मिन्नेव प्रसङ्गे महात्मभि धनाध्यक्ष ( ट्रस्टीशिप ) कल्पनाप्रस्ताव समुपस्थापितो येन धनपति-निर्धनाना स्पर्धाऽपि अकस्मादेव विलय याति। शरीर-श्रमव्रतेन च अध्यात्मपरिपन्थी तमोगुणो रजोगुणश्च मानवस्य नियम्यते। इत्थमनेन व्रतेन अध्यात्मसाधनेन सहैव लौकिक स्वामि-सेवकसङ्घर्ष, धनपति-निर्धनसङ्घर्षोऽपि सहजत परिह्रियते इति व्रतमिद सर्वथाऽनुष्ठेयम्।

## अस्वाद व्रतम्

अस्वाद व्रतविषये महात्मगान्धिन प्राहु—"अनायासेन यत्किमपि प्राप्यित भवति, सर्वमपि अस्माक कृते ग्राह्यम, न कथमपि त्याज्यम्। ईश्वरकृपा मत्वा सन्तोषपूर्वक शरीरनिर्वाहाय तद्ग्रहणमस्वादव्रतनिष्ठाया पर रहस्यम्। ब्रह्मचर्यव्रतपालनाय सर्वेन्द्रियाणा संयमनस्य आवश्यकत्वेऽपि स्वादग्राहकस्य रसनेन्द्रियस्य सयमन परमनिवार्यम्। आहार सदैव स्वल्प, स्वाभाविकोऽनुत्तेजकश्च भाव्य। अन्ततोऽस्वादो नाम स्वादस्याभाव। स्वादश्च रस आनन्दो वा। औषध यथा शरीररक्षणार्थमेव भक्ष्यते, न तत्र स्वादस्याऽवसर तथैव भोजनमपि ग्राह्य केवल शरीरयात्रानिर्वाहाय। इतोऽन्यत् सामूहिक-भोजनेनापि अस्वादनिष्ठा पोषणे साहाय्यं भवति। तत्र कस्याप्येकस्य रुचिविशेषेण पाको न निष्पाद्यते। अतएव सहजत प्रतिव्यक्तिगता भिन्ना रुचयो नियन्त्यन्ते।"

अस्वाद-विषये विशेषतो विमर्शनीय नावशिष्यते। अत्यन्तदौर्बल्यप्रयुक्तो दोषो नाम स्वादरस, योहि महतो विपद पदम। स्वादलोभेनैव मीना बडिशे बध्यन्ते। 'जित सर्वं रसे जिते' इति सूक्ति प्रथिततमेति व्रतमिद सर्वसाधारणैरनिवार्यतोऽनुष्ठेयमेव।

## भयवर्जनम्, अभय वा

भयवर्जनम्, अभय वा दैवीसम्पत्ते सर्वाग्रगण्यो गुणो भगवतैव गीताया प्रोक्त—अभय सत्त्वसंशुद्धि ' इत्यादिना। तद्विषये महात्मानो लिखन्ति—"अभयमन्तरा सत्यशोधनमेव कथम? 'हरिनो मारग छो शूरानो कायरनु काम जोरे' अर्थात् हरेर्मार्गं शूराणा वर्तते, न तत्र कापुरुषाणा प्रसक्ति। अभय नाम

समस्तबाह्यभयेभ्यो निवृत्ति । काम-क्रोधाद्यान्तररिपुभ्योऽपि भयनिवृत्तिरावश्यकी । वस्तुत एतेषां जयेनैव बाह्यभयेभ्यो निवृत्ति सुलभा जायते । परं 'सर्वमेतत् न मम, ईश्वरस्यैव एतत्सर्वम्, अहमपि तस्यैव' एतादृशनिष्ठाया दृढीकरणेन नूनं सर्वभयतो निवृत्तिर्भवति । उपनिषदाह—'तेन त्यक्तेन भुञ्जीथा ।' तस्यैव सेवका भूत्वा शून्यभाव स्वीक्रियते चेत् सर्वभयतो निवृत्ति, सहजा शान्ति:, सत्यनारायणस्य दर्शनं च जायते ।"

अभयव्रतमिदं सत्याहिंसाभ्यां सम्बद्धम् । अहिंसाया पूर्वोक्तरूपद्वयेन आत्म-दर्शन-हरिदर्शनात्मकेन निर्भयतापरपर्यायमभयमाविर्भवति । भयमिदं शारीरिकं मानसिकं व्यक्तिगत-सामूहिकं चेति विभज्यते । तत्र शारीरिकं मानसिकञ्च व्याख्यातपूर्वम् उपरिष्टात् । व्यक्तिगतनिर्भयता पुनस्त्रिविधा श्रीविनोबामहाभागै-र्व्याख्याता वर्तते । सा चेत्थम्—१. निष्णाता निर्भयता, २ ईश्वरनिष्ठा निर्भ-यता, ३. विवेकिनी निर्भयता च । मर्यादितस्य विषयविशेषस्य अभ्यासेन जायमाना आद्या । द्वितीया भक्ति-वैराग्याद्याध्यात्मिक-साधनसाध्या । चरमा विवेकिनी निर्भ-यता च नाम भयप्रसङ्गेऽपि चित्तस्थैर्यं विधाय विवेकेन सम्प्राप्तया स्थिरया सह-सफलसङ्घर्ष, अन्ततश्च हरिस्मरणेन नि सङ्कोचं देहोत्सर्गश्च । व्यक्तिगतनिर्भय-ताया इदं निष्कृष्टरूपम् । सामूहिकनिर्भयता पुनरस्माभिः वैदेशिकदासतापाशाना छेदनावसरेऽनुभूतपूर्वैव । सेयं निर्भयता अभयं वा अहिंसा-पालनेनैव साध्यत इत्यस्ति महात्मन समग्रस्य व्याख्यानस्य तत्त्वम् ।

## सर्वधर्म-समानत्वम्

सर्वधर्म-समानत्वस्य सर्वधर्मसमभावस्य वा विषये गान्धिमहाभागा आहुर्यत् "सर्वधर्मसमभावेन स्वधर्मविषये न जातु औदासीन्यमायाति । प्रत्युत स्वधर्म-विषयिणि प्रेम्णि, आन्ध्यं दूरीभूय तद्धि शुद्ध ज्ञानमयं सत् परिजायते । सर्वधर्मसम-भावेन अस्माकं दिव्यचक्षूंषि समुन्मीलन्ति । धर्मान्धता-दिव्यदर्शनयोः उत्तर-दक्षिणायितमन्तरं नाम । सर्वधर्माणामैक्यं किल नावश्यकम् । प्रत्युत विभिन्नधर्मा-नुयायिन परस्परमादरभाव सहिष्णुता च धारयन्तु । सर्वेषां धर्माणामात्मा एक एव । स हि विभिन्नप्रकृतिर्मूर्तरूपतां याति । कालस्य अन्तं यावदिदं वस्तु-चिरस्थायि । अतो मतिमता बाह्यकलेवरमुपेक्ष्य विभिन्नाकृतिषु वर्तमान एक आत्मैव परिदर्शनीय " इति ।

सर्वधर्मसमभावाख्यमेतत् व्रतम्, एतन्नामापि महात्मगान्धिना चेतसि दक्षि-णाफ्रीका देशे सत्याग्रहप्रसङ्गे उत्स्फूर्तम्, भारते च पुनरभ्यासेन तद् दाढर्यंगतम् । अहिंसासत्याभ्यां सम्बद्धमेतद् व्रतम् । अनेकानेकजातिधर्मसङ्कुलेऽपि अस्माकं भारते

देशे यूरोपीयराष्ट्रकल्पेषु विभिन्नप्रदेशेषु विलक्षणमैकमत्य परिदृश्यते, यदा किल एकभाषाभाषिष्वपि अस्मदीय-प्रदेशकल्पेषु तद्राष्ट्रेषु तन्न दृश्यते। अस्य नूनमेको हेतु सर्वधर्मसमभाव एव। परधर्मस्यानादर पर्यायत स्वधर्मस्यैवाऽनादरो मन्यते। प्रत्येकधर्मस्तदनुयायिना कृते स्वधर्मरूपेण नून पूर्णतम। विनोवा महाभागाना शब्दे स्वधातुरुपासनवत् प्रत्येकधर्मानुयायिभि स्वधर्मोपासन कर्तव्यम्। स्वतन्त्ररूपेण पुन सोऽपूर्ण एव। सर्वधर्मसमवायेन सम्भाव्यमानस्य स्वधर्मप्रमादसन्देहस्य परिहार पुनरुपरिष्टात् महात्मनैव कृत इति व्रतमिद सर्वथा राष्ट्रैक्यप्रसाधनम्।

## स्वदेशी-निष्ठा

स्वदेशी-व्रतविषये महात्मान प्रोचु —"स्वदेशीभावनाया अयमर्थो यदस्माक सा भावना, या किलास्मान् दूरतर क्षेत्र विहाय स्वसमीपवर्तिन प्रदेशस्यैव उपयोग सेवा च शिक्षयति। मम देशभक्तिवर्जनशीला ग्रहणशीला चाप्यस्ति। वर्जनशीलाया अयमाशयो यदह सप्रश्रय स्वकीय चेतो जन्मभूमावेव केन्द्रित करोमि। ग्रहणशीलाया इत्यस्यार्थो यन्मम सेवाया प्रतिस्पर्धाया विरोधस्य वा भावना लेशतोऽपि न वर्तते। स्वसम्पत्तेरेव उपयोगो विधेयो येन भवता प्रतिवेशी कथमपि पीडितो न भवेत। नाय शासकीयो नियम अपि तु महत्तरो जीवनसिद्धान्त एव। अहिंसाया प्रेम्णो वा समुचितपालनस्य कुक्षिकैवेयमि" ति।

स्वदेशभक्तिविषये पुन किमाम वक्तव्यम? भगवता मर्यादा पुरुषोत्तमेन रामभद्रेणाप्युक्तम्—

'अपि स्वर्णमयी लङ्का न मे लक्ष्मण रोचते।
जननी जन्मभूमिश्च स्वर्गादपि गरीयसी॥' इति।

'स्वतन्त्रताऽस्माक जन्मसिद्धोऽधिकार, त च नून गृहीत्वैव विरता भवेम।' इति मन्त्रस्य द्रष्टु लोकमान्यतिलकस्य पुनरिद व्रत तदीयाभिक्रमस्य मुख्यतमसाधनमेवाऽऽसीत। तथापि महात्मनामय सङ्केत कथमपि नानुपेक्ष्यो यत्स्वदेशभक्ति परदेशहितविप्रतीपा कथमपि न भाव्या। सर्वेषामविरोधेन ब्रह्मकर्मैद समाचरितव्यम्। लक्ष्य किल विश्वव्यापकम्, कार्यक्षेत्र पुन परिसरवर्ती प्रदेश एव भाव्य एतादृशेन भावेन कार्यकरण स्वदेशीव्रतमुच्यते। स्वराष्ट्रतमुन्नतौ व्रतस्यास्य नितरामावश्यकत्वमित्यत्र मतद्वय जातुचन न भवतीति सर्वथा सर्वेरविशेष समुपास्यमिदम्।

### स्पर्शभावना-व्रतम्

स्पर्शभावनाविषये महात्मना मतं यद् "अन्त्यजाना सेवा करणीयैव। न तत्र पापम्, अपि तु पुण्यमेव। रुग्णस्य अन्त्यजबालकस्य सेवा धर्म एव। रामायणे शबरी-निषादराजौ किमस्पृश्यावेव आस्ताम्। परं रामभद्रेण तौ स्वात्मीयौ कृतौ। अन्त्यजा अपि मानवा एव। 'तेषाम् अस्पृश्यत्वमित्युक्त्वा अवमानन तिरस्कारश्च मानवताविनाशवदेव भवत।"

धर्मस्य वास्तविक रहस्यमजानद्भि केवलं कर्मकाण्डपरायणै. कर्मजडैः स्वात्मानं सर्वश्रेष्ठममन्यै यैरिवद्धर्मधुरीणै निम्नवर्गेणाऽनेन सह क्रूरो व्यवहार क्रियते च स्वात्मप्रतिष्ठापन-भावना। न ह्यत्र शास्त्रं तथाकर्तुं समुपदिशति। विपद्ग्रस्तोऽन्त्यजबालक एव किम्, पशु-पक्षि-प्रभृतितिर्यग्योनिगतोऽपि स्यात्, तद्विपन्निवारणं मानवस्य पर कर्तव्यम्। शुनि श्वपाके विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि च तिष्ठन्तमात्मानम् एकत्वेन द्रष्टुं समुपदिशच्छास्त्रं कथं नाम स्वबान्धवानामन्त्यजाना परिपीडनमनुमन्येत? भारतीयसंस्कृतौ स्पृश्यास्पृश्यव्यवस्थाया न जातु घृणामूलकत्वम्। अपितु पूर्वजन्मीय-कर्मविपाक एव स। परमादरणीया मातरमपि रजस्वलाकाले वयं न स्पृशाम। नैतावता साऽस्मभ्यमनादरणीया समुपेक्ष्या वा जायते। परमनधिकारिणा केषाञ्चन एतद्रहस्यानभिज्ञानां स्वात्मगौरवप्रख्यापनचणाना स्वभ्रातृभूतानामन्त्यजाना परिपीडनेन प्रतिक्रियापीडिताः समुद्विग्ना. महात्मसुलभकरुणप्रकृतयोऽगान्धिमहाभागा. स्पर्शभावनमपि व्रतत्वेन स्वीकर्तुमतिशयं प्रेरिता अभवन्। तेषा स्पर्शभावना व्रतविषयकमुपरितनं विवेचनमपि निर्विरोधं सर्वभारतीयैं स्वीकर्तुं शक्यम्। प्रतिगतानामेतेषामस्मद् भ्रातृणा वास्तविकोत्कर्षकारिणी सुविधा अप्रदाय स्पर्शभावना व्रतनाम्नाऽद्य तदनुयायिभिः प्रतिहिंसाप्रवणं यत्कर्म समाचर्यते, तन्नाम कियदनेन महात्मनः स्पर्श-भावना व्रतेन सङ्गच्छते इति विवेकिना विचारणीयं वस्तु।

अन्यच्च, वैदेशिकशासकै प्रतिगतममुं वर्गं लोभेन समाकृष्य 'विभज्य शासनकरणनीते' (फूट डालो और शासन करो) प्रयोगोऽस्माकं भारतीयाना विरुद्धं चिक्कीर्षितपूर्वं। तेनापि महात्मनाऽनेन स्पर्शभावनाया व्रतत्वेन स्वीकार. कृतश्चेत् तन्नातिविस्मयावहं परमदेशभक्तस्य कस्यापि न कृते। ऐषा पवित्रकरुणाप्लुतभावनानिष्पन्न व्रतमिदं तेनैव रूपेण न कस्यापि विप्रतिपत्तिकरं भवेदिति संभावयाम।

### विनम्र-भावना

विनम्रता-व्रतविषये श्री गान्धिन ऊचु—"वस्तुनो व्रते नम्रताया प्रवेशस्तस्य गौरवमेव न्यूनतामापादयति। अस्पृश्यमसिद्धान्तोऽयं यदहिंसा-ब्रह्मचर्यनिष्ठे नूनं

नम्रो भवेत्। नम्रता-विहीना अहिंसा हास्यव्यङ्ग्यचित्रकल्पा। स्वात्मानं रज कण-वत् यावन्न मन्यते, तावदहिंसाव्रतग्रहणमसम्भवि। मनसि यावदहभावो न ताव-दीश्वरदर्शनम्। ईश्वरमिलन चिकीर्षित चेत् स्वय शून्येन भवितव्यमेवे" ति।

अत्र विषये किमधिकं वक्तव्यम् ? अहङ्कारस्तु सर्वस्यैव अनर्थजातस्य बीजं शास्त्रकृद्भिर्निगदित इति तत्परिहारो भारतीय संस्कृते प्राणपदमेव। नम्रत्वमिद फलोद्गमेन सहजत सिद्ध्यति। तत पूर्वं किल तत्वलसाध्यम्। स्वस्य शून्यत्व-भावनम्, परमेश्वरस्य च सर्वशक्तिमत्त्वस्वीकार जगतश्च सद्रूपत्वप्रत्ययो नम्र-ताया अमोघानि साधनानि वक्तु शक्यन्ते। अत इद व्रतमपि सर्वथा सर्वैरप्रमदि-तैरनुष्ठेयम्।

इदमत्रावधेयम्—यद्यपि एकस्मिन् सत्यात्मके महाव्रते एव पञ्चाना महाव्रताना-मन्तर्भावो जायते। किंबहुना, सत्य यथा साधन तथैव साध्यमपि। परमलक्ष्यस्य ब्रह्मणस्तद्रूपत्वात्। तथापि निरुपधिकरुणावता भगवता पतञ्जलिना अहिंसा-सत्या-स्तेयादिपञ्चव्रताना महाव्रतत्वेन गणन शिष्य बुद्धि-वैशद्यार्थं साधकाना साधनानुष्ठानसौविध्याय च कृतम्। एवमेव महात्मगान्धिभिरपि पञ्च महाव्रतै षण्णामुपव्रताना पृथक् गणन लौकिकालौकिकोभयविधाना साधकानाम् उभय-विधसाध्यसाधनायैव विहितम्। तेन च न विभागासङ्गतिकल्पनाया लेशतोऽप्यव-सर इति।

इत्थ महात्मगान्धिमहाभागै भारतभुव समागत्य एकादशव्रताना य आचारो विश्वस्य विशेषतो भारतराष्ट्रस्य कृते प्रदर्शित, स्वीयया अनितरसाधारणया प्रतिभया अध्यात्ममानफलानि महाव्रतानि राष्ट्रियहितसन्दर्भेण व्यापकीकृत्य व्या-ख्यातानि, आवश्यकतव्योपव्रतानि पूर्नविश्वहिताविरोधेन ससामयिकानि सहजानु करणीयरूपाणि प्रसाधितानि, तेषामीश्वरप्रार्थनादीनाञ्च समासत परिचयसमी-क्षणमस्माभिरत्र विहितम्। वैज्ञानिकेऽस्मिन् युगे विश्वस्य, भारतराष्ट्रस्य च कृते अनन्यसाधारणो दायाऽय तेषा महात्मनाम्। ईश्वरप्रार्थनासमन्वितोऽय धर्माचारो नूनम् इहामुत्र जीवनयो सुससाधक महत्तर जीवनपाथेय नाम। यदि नाम गान्धि-शतसंवत्सरी-महोत्सव प्रसङ्गेन वयमस्य दायस्य वास्तविकं मूल्यमभिलक्ष्य जीवने तमनुकर्तुं प्रवृत्ता प्रभवेम, तदेव महत समायोजनस्यास्य वास्तविक साफल्य भवेत्। तेषा प्रेष्ठस्यास्य राष्ट्रस्य समुन्नत्यै अमरात्मानस्ते महात्मान एवास्मान् तथा कर्तुं सद्बुद्ध्या याजयन्त्वित्यवास्ति जनस्याय तेषा पदपायोजयो श्रद्धामय शब्द-सुमनाञ्जलि।

●

# गान्धिनः शिक्षा-क्रान्तिः

श्रीरामनाथ पाठक 'प्रणयी', एम्-ए० ( द्वयम् ), डिप-इन-एड
साहित्यव्याकरणायुर्वेदाचार्य

विद्यावता सुविज्ञातमिदं यद्गान्धिन सर्वस्वं सर्वोदयदर्शनमस्ति। तस्य च मुख्यस्तम्भा सत्यमहिंसा प्रेम च विद्यन्ते। गान्धी सत्यमेवेश्वरं मनुते स्म। सत्ये तस्याविचलान्विमाश्रद्धासीत।

गान्धी लिखितवान् यत् सत्याहिंसे एव तवद्धे स्तो यत्तयो पार्थक्यमसम्भवमस्ति। सोऽहिंसा प्रसाध्या सत्यञ्च साधनं मत्वा चलतिस्म। साधन स्वीकृतिर्मानवधर्मोऽस्ति, यतो साध्यप्राप्ति तदुपरि निर्भरा विद्यते। गान्धिनोऽहिंसा केवलं हिंसानिवृत्तिपर्यन्तमेव न सीमिता, प्रत्युत तदहिंसाकल्पनापि तद्व्यक्तित्वसदृश्येवालौकिक रूपं धत्ते। गान्धिमतेनाहिंसाया अर्थोऽस्ति प्राणिमात्रं प्रति सद्भावना। एवंव सद्भावना श्रद्धा प्रेम वा कथ्यते।

अहिंसोपासक गान्धी प्रेम्णोरामराज्यं विधातु समीहते स्म। ससार या दलितजाती घृणया पश्यति स्म ता एव गान्धी हरिजन, शब्देनाभिधाय परमप्रेम्णाङ्गीकृतवान्। वर्गवर्णधनदातॄणां कृत्रिमसीमाभ्यो बहिरेकस्य स्वतन्त्रलोकस्य स्थापना गान्धी समीहते स्म। तस्य विचार आसीद्यत् सत्या मानवसेवैवेश्वरसेवा विद्यते। स हीश्वर सर्वव्यापिनममन्यत। तस्याधारशिक्षा ( बुनियादी शिक्षा ) सिद्धान्ता अपि तस्य तेष्वेव विचारेष्ववलम्बिता आसन्।

एवं हि सर्वोदयव्यवस्थाया सर्वे स्वावलम्बिनो भविष्यन्ति, सर्वे उत्पादकाश्च। यत आर्थिक समतैव सर्वोदयाधारो विद्यते। अद्य वयं पश्यामो यदार्थिकजीवन पुंजपतीना हस्तेऽस्ति तथा सामाजिकजीवन प्रतिक्रियावादिना करे। एतस्य परिणाम एव जायते यत् सर्वत्रासतोष दृश्यते। अत समाजसंस्कारस्यैव एव मार्गोऽस्ति, स च शिक्षया व्यक्तित्वनिर्माणस्य। गान्धी, विचारितवान् यत् मनुष्य स्वप्रारम्भिकवर्षेष्वेव तद्योग्यो भवति। अत एव तेन सर्वोदयलक्ष्यप्राप्तये (बुनियादी शिक्षा) आधारशिक्षा योजना समुपस्थापिता। तस्या योजनाया अप्याधार आध्यात्मिकजीवनदर्शनमस्ति। एवंव च गान्धिन परा शिक्षाक्रान्तिर्विद्यते।

१९३७ तमेशवोये २३ अक्टूबरे वर्धायां भारतीयशिक्षाशास्त्रिणामाहूते सम्मेलने गान्धिनाधारशिक्षायाः निम्नांकिताः मूलभूताः सिद्धान्ताः समुपस्थापिताः—

(१) प्रथमसप्तवर्षपर्यन्तं देशस्य सर्वे बालकाः बालिकाश्च निःशुल्कामनिवार्याञ्च शिक्षां प्राप्नुयुः

(२) शिक्षामाध्यमत्वेन मातृभाषा प्रतिष्ठिता स्यात् ।

(३) शिक्षा-केन्द्रे कश्चनोद्योगोभवेत् ।

(४) शिक्षाया एषा प्रणाली शनैः शनैरध्यापकानां वर्त्तनमपि निष्कासयेत्, एवं शिक्षा स्वावलम्बिनी स्यात् ।

गान्धिन एषैव शिक्षापद्धति 'नई तालीम' 'बुनियादी शिक्षा', आधारशिक्षादिनामभिराख्याता ।

शिक्षाया अर्थोऽक्षरज्ञानमात्रमेव नास्ति । अक्षरज्ञानन्तु शिक्षायाः साधनमात्रमस्ति । शिक्षाया अर्थस्तु वर्त्तते यद्बालकः समग्रेन्द्रियैः सत्कर्म कर्त्तुं शिक्षेत् । स हि कर्मेन्द्रियाणां ज्ञानेन्द्रियाणाञ्च सत्प्रयोगमवगच्छेत् । अत एवाधारशिक्षायाः वाहनभूतस्य कस्यचन ग्रामोद्योगस्य तस्यां परमावश्यकता विद्यते । गान्धिनः सत्यस्यापि प्रयोग तदीय शिक्षाप्रयोग एवास्ति ।

गान्धी प्रयोगैः ज्ञातवान् यन्नैतादृशः कोपि जनोऽस्ति, यस्य हृदये प्रेम न भवेत् । अतः प्रेमातिरिक्तं न किञ्चन वस्तु, यत्मानवहृदये विजयं प्राप्नुयात् । आधारशिक्षायां प्रेम्णः सद्भावस्य च क्रियात्मके रूपे दृश्येते ।

गान्धिनः शिक्षासम्बन्धी सर्वप्रथम प्रयोग १९११ खीष्टाब्दे अफ्रिका निकटे जोहंसवर्गसमीपे 'टालस्टायफार्म'-नामके स्थानेऽभवत् । तस्मिन् स्थाने 'हिन्दू-मुस्लिम-पारसी' जातीया जनाः आसन् । यदा तेषां बालकानां शिक्षा-समस्योपस्थिता तदैका पाठशालोद्घाटिता । गान्धी तस्यां स्वयं शिक्षककार्यभारं गृहीतवान् ।

स उद्योगद्वारेण कार्यं प्रारब्धवान् । एतादृशंवातावरणञ्च निर्मितवान्, येन बालकानां शारीरिक-मानसिक-नैतिक-विकासाः मनोवैज्ञानिकप्रणाल्या भवेयुः ।

१९१५ खीष्टाब्दे यदा गान्धी भारतवर्षे समागत, तदा सर्वप्रथम 'साबरमती' आश्रमे, ततश्च सेवाग्रामाश्रमे एतस्या प्रयोगं कृतवान् । प्रारम्भिक-शिक्षाध्ययनक्रम-योजना-निर्माणार्थञ्च तेनैका विशेषज्ञसमितिराहूता, यस्या अध्यक्षता स्वर्गीय. डाक्टर जाकिर हुसेन महोदयोऽकरोत् ।

तस्या निम्नांकिता. सदस्या आसन्,

१. आर्यनायकम्

२. श्री विनोवा भावे

३. काका कालेलकर

४ किशोरीलाल मशरूवाला

५. कुमारप्पा

६. के० जी० स्यादेन

७ कृष्णादास जाज

८. प्रो० के जी शाह

९ श्रीमती अरुणा देवी

श्रीमत्या अरुणादेव्योल्लिखितसमितौ विस्तृतशिक्षाक्रमोनिर्मितो यश्च पश्चात् १९३८ ख्रीष्टाब्देऽखिलभारतवर्षीयहरिपुराकाग्रेसे रक्षित । वाद-विवादानन्तरं काग्रेसेनैतस्या योजनाया पूर्ववर्तिनस्त्रयो नियमा स्वीकृता ।

एवं हि गान्धिमतेन शिक्षा ( Head ) शिरसि, ( Hand ) हस्ते तथा ( Heart ) हृदये आधृतास्ति । क्रियाशीलता तथानुकूलोऽवसर. तस्या आधारशिले स्त । अनुकूलावसर वीक्ष्यैव कर्म-ज्ञानयोरभिन्न सम्बन्ध स्थाप्यते । एवं समवाय-आधारशिक्षाया. द्वितीय नामास्ति । यो ऽवसर सहजरूपेणास्माकं सम्मुखे आयाति, तस्य सम्यक् रूपेणोपयोग समवाय-कला वर्त्तते । बुनियादी शिक्षायामेव समवाय परमावश्यकोऽस्ति । कर्मद्वारेण शिक्षा समवायापरनाम विद्यते ।

कर्मद्वारेण शिक्षाया प्रणाली प्राचीना वर्त्तते । वैदिकयुगे विद्यार्थिनोऽध्ययने-रता अभवन् । ते गुरोराश्रम एव निवसन्त विद्याध्ययनमकुर्वन् । ते केवलं सिद्धान्त-रूपेणैव शिक्षा न प्राप्नुवन्ति स्म, प्रत्युत तेषा शिक्षाया प्रयोगस्यापि स्थानमासीत् । यत तथैव पद्धत्या शिक्षिता अनेकेऽर्थशास्त्रिणो दार्शनिका महात्मानो जाता ।

अतो गान्धिना समुपस्थापिताया शिक्षायामुत्पादनस्योद्योगस्य च महत्त्वपूर्णं स्थानमस्ति ।

उद्योग ज्ञान जनयति, ज्ञानञ्चानुभूत्या जायते । अनुभूतिश्च कार्यादुत्पद्यतेऽतो प्रमाणितमेतत् यत् ज्ञानस्रोत कर्म, उद्योगोवास्ति ।

उद्योगकेन्द्रिता शिक्षापद्धति मनोवैज्ञानिको विद्यते । यत उत्पादककार्याणि कुर्वन्तोय विद्यार्थिनाथाविजीवनस्य व्यवस्थामापादयति । उद्योग बालकानां स्वाभा-विकप्रवृत्ते क्रीडाया रचनाया सयमादेश्च प्रवृत्ती विकासयति । एतेन विद्यार्थि-षेषामात्मप्रदर्शनभावना तुष्यति । उदाहरणार्थं तर्कुचक्रस्य, कार्पासस्य वस्त्रादेश्च विषये ज्ञानमवाप्य ते स्व-जिज्ञासापूर्त्ति कामयन्ति । प्रोटेस्टिमहोदय. मन्यति यत्

"मनुष्य यस्या अपि श्रेण्या भवेत्, विज्ञानस्योद्योगस्य विकासकृतेऽपि तथा समाजस्य सामूहिकलाभदृष्ट्या स एतादृशी शिक्षा प्राप्नुयात्, यया स विज्ञानस्य पूर्णशिक्षया सह 'दस्तकारी'-शिक्षा योजयेत्।

अक्षरज्ञानस्य शिक्षया सहोद्योगशिक्षाप्यावश्यकेति विषये स्विटजरलैण्ड ( Switizer land ) देशस्य शिक्षाविशारद श्रीप्रिकुट महोदय कथयति यत् बालकानामध्ययनमेतादृशैरनुभवै उत्तरदायित्वेन च सह सम्पन्न भवेत्, येन विद्यालयपाठ्यक्रम एकस्या सजीवाया विज्ञानशालाया परिणत स्यात्।"

पूज्यगान्धिना बुनियादी शिक्षायै रुक्हीनाग्रद्रुतस्य सज्ञा प्रदत्ता। स बुनियादी-शिक्षया समाजस्य प्राचीनमूल्यानि समूलानि समाप्य तेषा स्थानेषु नवमूल्याना स्थापनमहत्त्वाकाङ्क्षावानप्यासीत। बुनियादी शिक्षाया नियमाना स्पष्टीकरण कुर्वन्नेकदासौ एतल्लक्ष्योन्मुखमप्युक्तवान "आधारशिक्षाया ( नईतालीमस्य ) पूर्व-वर्ति उद्देश्य केवल सतुलित सामञ्जस्यपूर्णञ्च व्यक्तित्वमेव नास्ति, प्रत्युत सतुलित सामञ्जस्यपूर्ण समाजोऽप्यस्ति। स च न्यायपूर्ण स्यात्। येन धनिक निर्धनयो काचन विभाजिका मध्यरेखा न स्यात, यत्र प्रत्येकजन आजीविकाश्वासन प्राप्नुयात् तथा प्रत्येकनागरिक स्वतन्त्रताधिकार प्राप्नुयात्।"

निम्नाङ्कितपक्तिषु सामाजिकमूल्याना सक्षिप्ता विवेचना प्रस्तूयते।

१ डाक्टर जाकिर हुसैन समित्यनुसार 'सामाजिकदृष्ट्या शिक्षायामेतादृशाना क्रियात्मकोत्पादकोद्योगाना समावेशेनैव बुद्धिजानि श्रमजानिनोर्मध्यस्य रेखा छिन्ना भविष्यति। एव श्रमनिष्ठा तथा मानवैकता सर्वप्रकारै प्रोत्साहिते भविष्यत तदा शिक्षिताशिक्षितवर्गयो पार्थक्यं समाप्त भविष्यति।

१ कुलाधृत जन्माधृतश्च वर्गभेद समाप्त स्यात्।

३ समाजे सत्याहिंसा सिद्धान्ताना स्थापना। सत्याहिंसयो सिद्धान्ताना राष्ट्रजीवने प्रयोगाय बुनियादी शिक्षा यतते।

४ सहयोगि समाजस्य रचना।

५ बालकेषु सुनागरिक-गुणाना विकास

समाज व्यक्तिभि निर्मीयते। यदि कस्मिँश्चिदपि समाजे व्यक्ति-चरित्र साधु नास्ति, तदा समाज नोन्नतिं विधास्यति। बुनियादी शिक्षा एतद्विषये पूर्णा प्रबुद्धा वर्तते। सा व्यक्ति समाजमेकाकारूपेण गृह्णाति। तद्विकासञ्च समाजोन्नतिसोपान मनुते। समाजे उद्योगेनान्यवृत्तिभिवा तदीयविकासस्य व्यवस्था क्रियते।

आर्थिकदृष्ट्यापि बुनियादी शिक्षाया महत्त्व न तिरोहित विद्यते।

स्पष्टमस्ति यत् 'बुनियादी शिक्षा'—आधारशिक्षा दर्शनपूर्णा तथा भारतवर्षस्य सामाजिकार्थिकावश्यकतानुरूपा विद्यते। एषार्थिकविषमता समाप्य बालकान् शान्तानात्मनिर्भरान् च करोति। एषा ग्रामोद्योग पुनर्जीवित विधाय ग्रामीणार्थनीति पुन प्रतिष्ठापयति। गान्धिन एषैव सर्वोत्तमा शिक्षा क्रान्ति विजयते।

